मनोऽनिशं या हरिपादपद्मयोः रतं व्यधात् पावनमानसा मुदा ।
कुमारिका नाम सुधानुजात्मजा स्मृतौ हि तस्या रचनेयमादृता ॥

ाब्दः १६३२ सुधानिधनतिथि : २२.११.१९७६

श्रीः



# श्रीकृष्णचरितम्

(महाकाव्यम्)

(Shrikrishnacharitam)

( Epic )

प्रणेता

आचार्यरमेशचन्द्रशुक्लः

साहित्याचार्यः, सांख्ययोगाचार्यः, एम०ए०, पीएच० डी०

अलीगढ़स्थश्रीवार्ष्णेयकालेजसंस्कृतविभाग-भूतपूर्वाचार्यः




प्रकाशिका

देववाणी-परिषद्, दिल्ली

६,वाणी-विहारः, नयी दिल्ली-११००५९

(भारतम्)

श्रीकृष्णचरितम् (संस्कृतमहाकाव्यम्)

प्रणेता : डॉ० रमेशचन्द्रशुक्लः

प्रकाशिका : देववाणी-परिषद्, दिल्ली
६, वाणी-विहारः, नयी दिल्ली-११००५९

मुद्रकः : इण्डियन प्रिण्टिग प्रेस,
७३-दक्षिणी भोपा रोड़, नई मण्डी, मुजफ्फरनगर, दूरभाष : ५१८२

संस्करणम् : प्रथमम्, नवम्बर १९७९ ई०

मूल्यम् : त्रिशद् रूप्यकाणि. रु० ३०:००






SHRIKRISHNACHARITAM (Sanskrit Epic)

Author : Shukla, (Dr.) Ramesh Chandra

Publisher : Devavani Parishad, Delhi
6 Vani Vihar, New Delhi110059

Printers : Indian Printing Press
73-South Bhopa Road, New Mandi, Muzaffarnagar
Phone : 5182

Edition : First, Nov. 1979

Price : Rs. Thirty only Rs.30:00

# प्रास्ताविकम्

'देववाणी-परिषद्, दिल्ली' इत्येतदाख्येयं संस्था सद्ग्रन्थ-प्रकाशनरूपस्वोद्देश्यानुसारं कविवररमेशचन्द्रशुक्लप्रणीतं 'श्रीकृष्णचरितम्' संस्कृतमहाकाव्यं प्रकाशयन्ती कामप्यनिर्वचनीयां मुदमावहति। विविधच्छन्दोऽलङ्कारैश्चिता, प्रसादगुणोपेता, कान्तासम्मितोपदेशदात्री, सूक्तिरत्नप्रभाभिः सहृदयहृदयानि प्रकाशयन्ती, भगवन्तं स्तुवन्ती श्रीकृष्णस्य जन्मतो महाभारतयुद्धपर्यन्तं चारुचरित्रं चित्रयन्ती चेयं कृतिः कस्य सचेतसो मोदाय न कल्पते? कविवरेणास्य महाकाव्यस्य 'नम्रनिवेदने' यदुक्तं तत्सर्वथा युक्तम्।

मुद्रणगतानि कानिचित् स्खलनानि कृपालवः पाठका अवश्यं समाधास्यन्तीति विश्वसिमि।

आचार्यश्रीडॉ० रमेशचन्द्रशुक्लमहाभागाः सुरभारत्यर्चनाय सादरं वर्धाप्यन्ते।

विदुषामाश्रवः

गीता-जयन्ती — रमाकान्त शुक्लः

३०-११-१९७९ — महासचिवः, देववाणी-परिषद्, दिल्ली

६, वाणी-विहारः, नयी दिल्ली-११००५९

# समर्पणम्

श्रीकृष्णाङ्घ्रिनिषेवणे बहुमुदा स्वं जीवनं यार्पयत्
औदार्यद्युतिभूषिता गुणवती धर्मैकरक्षाव्रता
चञ्चच्चारुचरित्रकान्तिकलिता लग्ना समाजोन्नतौ
तां राधां प्रति काव्यकृष्णचरितं भक्त्यार्प्यते सादरम् ।।



# नम्रं निवेदनम्

गीतं कृष्णचरित्रमत्र ललितं पापापहं मङ्गलं
धर्मत्राणकरं रतञ्च जगतीकल्याणकृत्कर्मसु
साधूनामनिशञ्च रक्षणकरं विध्वंसकं दुष्कृतां
सन्नीतिस्मृतिवेदशास्त्रनिपुणं शस्त्रास्त्रविज्ञप्रियम् ।।१।।

सान्द्रस्नेहरसात्र कोमलपदा ध्वन्यध्वगा भारती
सालङ्कारगुणार्थगौरववती विद्यावतां श्रेयसी
शिष्टाचारवतीह संस्कृतिमती भावानवद्याश्रिता
भ्रष्टाचाररिपुः स्वभारतमहीसम्पत् परिस्पन्दते ।।२।।

एषः शुक्लरमशचन्द्रसुजनप्रज्ञानुगः काङ्क्षति
भूयाद् भारतवर्षसर्वजनता कृष्णोपदेशश्रिता
येन स्यात् त्वरयाभिवंद्यचरिता सद्धर्मकर्मस्थिता
संसारे महिमार्चिता सुरगिरोत्कर्षस्थचित्तात्र सा ।।३।।

**रमेशचन्द्रशुक्लः**

प्रो० चिन्तामणिशुक्ल-स्वाध्यायसदनम् ३०-११-१९७९
५८, कृष्णापुरी, मथुरा ।

श्रीः

# प्रथम सर्गः

जगन्ति यस्मिन् सविकास मासते
भवन्ति लीलानि च यत्र शाश्वते
पितेव यो रक्षति तानि तं मुदा
नमामि कृष्णं सगुणञ्च निर्गुणम् ॥१॥

स भक्त्यधीनः परमेश्वरो हरि
र्विपत्समुद्रान्निजभक्तमञ्जसा
कृपामयो ह्युद्धरति प्रियः सतां
त्रिलोकनाथो भुवि पाति तं सदा ॥२॥

प्रयान्त्यघानि क्षयमेव तस्य यः
प्रभोश्चरित्राणि हृदैव गायति
जनः प्रवृत्तोऽस्ति च तानि कान्यतो
ऽप्ययं मुदा गातु मिहातिमन्दधीः ॥३॥

अधर्मवृद्धिं भुवि धर्महीनतां
विलोक्य भक्तार्तिविनाशनोद्यतो
ऽपिसत् सुहृद् दुर्जननिग्रहप्रियः
उपाददाति स्वजनुर्भवन्नजः॥४॥

प्रदर्श्य सन्मानवतां समुज्ज्वलां
पवित्रचारित्र्यततिञ्च धर्मगां
वरं भवेल्लोकहितं विचिन्त्य सः
यथोचितेऽनेहसि जायते क्षतौ ॥५॥

अजो वशीकृत्य महाद्भुतो हरि
श्चराचरेशः प्रकृतिं स्वमायया
बिभर्ति देहं पुरुषस्य पूरुषो
ब्रवीति शास्त्रं नितरामिति स्फुटम् ॥६

अभूत् स्थिति र्भारतवर्षवासिनां
प्रभूतशोच्या बहुविघ्नपीडिता
विपन्महादुःखनितान्तदुःखिता
पुरावताराद् भगवद्धरे स्तदा ॥७॥

नृपा अजायन्त महाप्रमादिनो, जगत्सुखासक्तविलासिजीवनाः
अनीतिनिष्ठा वहुदोषगामिनः कुनीतिवर्त्मस्थचरित्रनिन्दिताः ॥८॥

अनन्तलोभाकुलमानसस्थिता
विकत्थनस्वार्थरताश्च दर्पिणो
दुराग्रहस्थाः वसुधाभराधिपाः
असज्जनानां सुहृदोऽरयः सताम् ॥९॥

अरीरमंस्तेन हिताय मानसम्
अयूयुजं स्तत् सततं च विग्रहे
बलिष्ठभूपाः क्षितिपांश्च निर्बलान्
निचिक्षिपुर्वन्दिनिकेतने दृढे ॥१०॥

अनेकदुर्बुद्धिनृपा मनोऽधमाः
वहूनि कार्याणि मलीमसानि च
विधाय देशे वलदारुणाधिकं
स्वकीय मातेनु रलं समुद्धताः ॥११॥

विलोकिताभूद् भृशधृष्टतामयी
गतिश्च वृत्तिर्बलगर्विताऽऽसुरी
जगन्मदोन्मत्तप्रमत्तमेदुरम्
अवाप्त मासीत् कलुषञ्च निष्ठुरम् ।।१२।।

नृपा अभूवन्निव दैत्यदानवा
श्छलेषु तेषां कपटेषु मानसं
व्यलोकि लोके दुरितक्रियान्वहं
भरस्तदीयो वसुधा मपीडयत् ।।१३।।

कृतौ निबद्धौ निजवन्दिसद्मनि
पिता च माताप्यथवन्दिनाविव
प्रमत्तकंसेन कठोरकर्मणा
नृपेण कंसस्य कुमार्गयायिना ।।१४।।

बभूव कृष्णं स निहन्तु मुद्यतः
परं पिता तस्य जनुर्यदाऽभवत्
तदैव नन्दस्य निकेतनं सुतं
निनाय सद्यो भगवन्तमुद्गतम् ।।१५।।

स भाद्रमासोऽसितपक्षवर्तिनी, तिथिश्च सासीच्छुभमञ्जुलाष्टमी
निशीथिनी मेघघटावृतं नभ स्तदा बभुः कृष्णजनु र्यदास्फुरत् ।।१६।।

यमस्वसासीत् सरयाम्बुवर्धिता
दिशश्च कृष्णाः अभवन् भयप्रदाः
घने दिदीपे चपला पुनः पुनः
ववौ सवेगः पवनोऽपि पावनः ।।१७।।

स तादृशेऽनेहसि भीषणेऽप्ययं
असूनुपेक्ष्य, स्वसुतस्य रक्षणे
प्रदत्तचित्तो वसुदेवपुण्यवान्
ततार भीमां यमुनां जलोद्धताम् ।।१८।।

असूत नन्दस्य सुतां प्रिया तदा
प्रगृह्य तल्पान्नवजातपुत्रिकां
ततः प्रतस्थे वसुदेव आपदा
पुरीं स्वकीयां व्यथितस्त्वरान्वितः ।।१९।।

विलोक्य कंसो झटिति प्रकोपवान्
नवां प्रसूतां तनयां शिलोरसि
बलात् प्रचिक्षेप रुषा दिवं गता
निधाय रूपं तमवोचदद्भुतम् ।।२०।।

त्वदीयहन्ता हतकंस साम्प्रत
मवातरद् भूभुवनेऽघकर्मवन्
नवेहि पापानि विनाशयन्ति तं
प्रवर्तते यो दुरितेषु दुर्जनः ।।२१।।

निशम्य वाचा मघलीनभूपति
र्बभूव चित्ते स नितान्तपीडितो
भवन् सरोषो व्रजजातशावकान्
ददावनुज्ञाञ्च निहन्तु माशु सः ।।२ ।।

इतश्च विघ्नास्तरसैव गोकुले
भयङ्कराः प्राणहराश्च दुस्तराः
भृशन्तदानीं पतितुं समुद्यताः
जना अवेपन्त च कष्ट माययुः ।।२३।।

ततो महामानसनन्द उद्भवे सुतस्य सानन्द मयूयुजन्महः
श्रुतिज्ञविप्रान् नववस्त्रभूषणैरलंकृतः सन् द्रुत माह्वयन्मुदा ॥२४॥

अवा ्यत् स्वस्त्ययनं यथोचितम्
अकारयद् बालकजातकर्म च
धनानि धेनूः प्रददौ च सम्पदो
महीसुरेभ्यो बहुहर्षपूर्वकम् ॥२५॥

तिलाद्रिरत्नानि बहूनि सादरं
प्रदाय नन्दो मधुरञ्च भोजनम्
अकारयत् प्रीतियुतं शुभेऽह्नि
ममौ महन्नो हृदि तस्य तत्सुखम् ॥२६॥

जगुस्तदा मङ्गलगीतिगायकाः
शुभा अवोचंश्च महीसुरा ऋचः
मुहुश्च भेर्यो न्यनदन् महोत्सवे
प्रसूनमुक्तामणिरत्नशोभिते ॥२७॥

जगुर्भवन्त्यो मुदिता व्रजाङ्गनाः
मुहु र्यशोदाभवने स्मिताननाः
उपायनं गोपजनाश्च पुष्कलं
समागता नन्दनिकेतनं ददुः ॥२८॥

इतश्च विप्रान् सुरपूजनव्रतांस्
तपस्वि यज्ञार्चनशीलसज्जनान्
पयस्विनीः पीडयितुञ्च वाञ्छया
कठोरतापूर्वक मादिशत् नृपः ॥२९॥

जिहिंस कृष्णः प्रथमं हि पूतनां
बभञ्ज भीमं शकटं ततश्च सः
ततस्तृणावर्तमसावधीद् हटात्
न्यपातयत् सर्व मिदं तु विस्मये ।।३०।।

अघं च वत्सञ्च वकञ्च धेनुकं
प्रलम्बदुष्टं न्यवधीत् स नन्दनो
भयङ्करञ्चोद्धरतिस्म कालियं
जुगोप कृष्णो व्रजमित्थ मञ्जसा ।।३१।।

निपातिताभ्यो जनतां व्रजस्य सः, महाविपद्भ्योऽनुदिनं निरन्तरं
ररक्ष कृष्णोऽवहितेन चेतसा, स्वबाल्यकालात् प्रिय एव तेजसा ।।३२।।

व्रजे वसन् कृष्णदयामयो महान्
अजस्रमेवावजगाम पावनीं
नृणां हि सेवां विहितां हृदोज्ज्वलां
विना स्वलाभं हृदये निधाय सः ।।३३।।

समाजसेवास्त्रलगद् भृशं मनः
कुमारकृष्णस्य विशालचेतसो
ह्यजीगणन्नो विपदं च कामपि
कदाप्यजेयां कठिनां स दुस्तराम् ।।३४।।

यथा यथासेवत सज्जनानसौ
तथा तथाप्रीयत तस्य मानसं
स मातरं स्वां पितरं च सर्वदा
हृदा यशोदा मथ नन्द मश्रयत् ।।३५।।

व्रजाङ्गना-गोप-कुमार-बालिकाः
व्रजस्य वृद्धाः सकलाश्च धेनवो
ययुः प्रमोदं नितरां मनोरमैः
सुशीलकृष्णस्य हि कार्यकौशलैः ।।३६।।

अनेकलीलाः जनमानसप्रिया
श्चकार कृष्णश्च वसन् व्रजोत्तमे
स वेणुना मञ्जुलनृत्यगीतिभि
रमोदयन् नॄन् नवनीतचोरणैः ।।३७।।

स एकदा गोपजनांश्च गोपिकाः
ररक्ष दावानलमृत्युभीषणात्
स्वयोगशक्त्या सदयो भयार्दिताः
असूनवाप्याति मुदं ययुश्च ते ।।३८।।

व्रजस्य राधादिसमस्तगोपिका-
मनः सदारंस्त मनोज्ञमञ्जुल-
प्रियासु लीलास्वति मोहनस्य हि
विहाय कृष्णं प्रययु र्न ता मुदम् ।।३९।।

सुदर्शने सोऽदयतापि माधवश्चकार तं ह्युद्धृत मीडयपावनः
स शंखचूडं हतवांश्च केशिनम् अरिष्टदुष्टञ्च जघान सत्वरम् ।।४०।।

अथैकदा वृष्टि रभूद् व्रजेऽधिका
विनाशिका प्राणभृतां पतत्रिणां
गवां पशूनां कृषिगेहसम्पदाँ
जना अभूवन् बहुदुःखदुःखिताः ।।४१।।

ययुश्च कृष्णं शरणं भयार्दिता
स्तदाशु ते रक्षकभक्तवत्सल
मवप्रभो नः शरणागतान् जनान्
प्रचण्डवृष्टिप्रलयादतो द्रुतम् ।।४२।।

हरेः सपर्या हि मया निवारिता
त्वभूद् विडौजा अतएव कोपभृद्
विनाश्य तस्याखिलदर्पसम्पदं
मयाद्य रक्ष्या ब्रजमानवप्रियाः ।।४३।।

विमृश्य कृष्णो ब्रजमानवानिद
मुवाच गोवर्द्धनपर्वतं द्रुतं
भवन्त आयान्तु समग्रबन्धवो
भवेत् सुरक्षा भवतां गिरीश्वरात् ।।४४।।

ततः स उ थाप्य महीधरं जनान्
जुगोप योगेश्वरकृष्णमाधवो
दिनानि योगेन च सप्त तं गिरिं
न्यधात् कनिष्ठांगुलिमूर्ध्नि लीलया ।४५।।

जनानगौप्सीद् व्यदधाच्च वासवं
विनष्टदर्पं ब्रजमेदिनीं व्यधात्
प्रसन्नचित्तां विनिवार्य भीषणां
बलीयसीं वृष्टिममूं प्रभुर्हरिः ।।४६।।

विलोक्य कृष्णस्य महान्ति बन्धुर—
प्रियाणि दिव्यानि महाद्भुतानि च
ययुः प्रसाद भृशविस्मयान्विताः
मुदं परां सर्वजनाश्च गोकुले ।।४७।।

समस्तनन्दप्रभृतिव्रजप्रियाः, ययुः प्रमोदं प्रचुरं प्रकृष्टं
मुदा महत्या ह्यभिषेकमाचरन् प्रियस्य कृष्णस्य च तूर्यनिस्वने ।।४८।।

तदातिमोदेन सुराश्च चारणाः
सुमानि तत्र व्यकिरन् यशो जगुः
सुराङ्गनाः संननृतुश्च गोपिकाः
समग्रलोकः श्रिय मद्भुतां गतः ।।४९।।

निशम्य कृष्णस्य बलं यशो गुणान्
जगाम कंसोऽतिशुचं स्वमानसे
स गोकुलं प्रेषयतिस्म चिन्तित
स्तदैव चाक्रूरमनीषिणां प्रियम् ।।५०।।

जगाद तं ह्यानयनाय सत्वरं
व्रजाच्च कृष्णस्य हलायुधस्य च
तदीय मादेश ममुं निशम्य सः
चचाल नन्दस्य च गोकुलं ततः ।।५१।।

तदाज्ञयाक्रूरमनोऽत्यदूयत
विचार्य कंसस्य कुवर्त्मगामितां
कठोरकार्याचरणञ्च दुष्टतां
प्रगाढ़चिन्ता मगमद् व्यथाप्रदाम् ।।५२।।

रविः प्रतीचीं ककुभं यदाश्रयत्
ययुः खगाः स्वां वसतिं तरुश्रितां
तमो व्यतानीत् प्रभुतां दृढीयसीं
स आययौ नन्दनिकेतनं शुभम् ।।५३।।

समागतोऽक्रूर इति व्रजप्रियं
व्रजं हि नेतुं मथुराम्प्रति क्षिति
निशम्य सर्वा व्रजमण्डलस्य सा
व्यथाकुलाभूद् विवशा च बाधिता ॥५४॥

विलोक्य गोप्योऽथ च गोपबन्धवो
व्रजन्त मीड्यं प्रियकृष्णसुन्दरं
स्वबन्धुसर्वस्वविपत्सहायकं
शुचं व्रजन्तो रुरुदु र्मुहु र्मुहुः ॥५५॥

विना च कृष्णं बलरोहिणीसुत, मभूत् ततो गोकुल मावृतं भृश
मिवान्धकारेण दिनानि वासिनो व्रजस्य निन्यु र्व्यथितेन चेतसा ॥५६॥

भृशं स्मरन्त्यः स्वदिनान्ययापयन्
प्रियं स्वकृष्णं व्रजगोपगोपिकाः
सदा यशोदा स्थविरश्च तद्धव
व्रजेशनन्दः स्मरतःस्म नन्दनम् ॥५७॥

शश्वज्जगद्धितकरीषु विलोक्यते यो
लीनः क्रियासु विविधासु महोज्ज्वलासु
धर्मप्रदर्शनपरासु भवन् विनीतः
कृष्णं गतच्छलमनास्तमहं नमामि ॥५८॥

साहित्याचार्य-सांख्ययोगाचार्य डॉ० रमेशचन्द्र शुक्लकृत श्रीकृष्णचरित-
महाकाव्ये कृष्णस्य मथुरागमनं नाम प्रथमः सर्गः

# द्वितीयः सर्गः

पथि विलोक्य शरच्छविमञ्जुलां
नवनवांकुरवृन्दमनोरमां
वसुमतीं गतकर्दमनिर्मलां
परममोद मविन्दत माधवः ॥१॥

विमलवारिमनोज्ञविभावती
पुलिननिर्मलता सरितां प्रिया
विगतदोषमनो मुनियोगिना
मिव भृशं परितोषयति स्म तम् ॥२॥

फलभरानमिता नयनप्रियाः
प्रचुरशालिमनोरमपङ्क्तयः
शरदि शोभितरूपवतीसमाः
हरि-मनो नितरा महरंस्तदा ॥३॥

शरदि कुत्र बभौ न मनोरमा
प्रचुरकाशतति र्धवलालका
इव दिशो विहगस्वनसंस्तुता
शुशुभिरे नवनिर्गुणदेवताः ॥४॥

कुसुमसुन्दररम्यलतावलि
र्मृदुलसौम्यवपु र्हरिताम्बरा
स्मितमुखीवदलप्रियमण्डिता
नयनसौख्यकरी शुशुभे भृशम् ॥५॥

सरसशाद्वलसुन्दरसौरभ-
श्रितविचित्रविभावृतपुष्पभृत्-
फलविनम्रमहीरुहभूषितं
वनमभून्नितरां परितोषदम् ।।६।।

विकसति स्मनवाम्बुजरम्यता
सरसि तत्र च षट्पदगुञ्जनं
मधुरमेव भवच्छ्रुतिसौख्यदं
प्रसरति स्म दिशास्वखिलास्वपि ।।७।।

विलसति प्रियसस्यसुपक्वता
भवति सा कृषिजीविहितावहा
निखिललोकहिताय शरच्छवि
र्वितरति प्रियतां परमोज्ज्वलाम् ।।८।।

विगतमेघघटं गगनं विधुः
परमनिर्मलतारकितं च तत्
वसुमती विततप्रियचन्द्रिका
ददति कामपि शान्तिमयी मुदम् ।।९।।

मृगकुलं मुदितं विपिने भवद्
विहरति द्युतिमद्दिवि पक्षिणो
विचरणं शरदीह च कुर्वते
प्रियतराः प्रतिभान्ति च धेनवः ।।१०।।

रुचिरनिर्झरपर्वतपेशलाः
क्वचिदपो वितरन्ति न ते क्वचित्
ददति साधुजनाः स्ववचोऽमृतं
भुवि यथा मनुजाय यदा तदा ।।११।।

त्यजति पङ्कमियं शरदि क्षिति
जँहति वीरुध आमदशां पुनः
वुधजनश्च विमुञ्चति नश्वरे
प्रकृतिवस्तुनि मोहधियं यथा ॥१२॥

शरद आगमने सति वारिधि र्व्रजति नीरवतां स्थिरतोयतां
मनसि कामहते शमपावनं मुनिजनो हि बिभर्ति यथा दृढम् ॥१३॥

सुदृढसेतुसहायतया यथा
खलभुवे सलिलं हि कृषीबलाः
निदधते मुनयोऽसुबलेन च
धवलबोध मवन्ति निपाततः ॥१४॥

शरदि भास्करतापकृतां व्यथां
हरति शीतकरो निशि नुः शशी
भगवतः करुणा हरतेऽज्ञतां
झटिति भक्तजनस्य यथाऽमिता ॥१५॥

अवगतश्रुतितत्त्वमनो यथा
स्फुरित सत्वगुणं बहु भाति सत्
विगतमेघ समुज्ज्वलतारकं
शरदि हन्त चकास्ति नभस्तथा ॥१६॥

समुदयं जनतैति यथा क्षितौ
सति नृपे नयधर्मपरायणे
समुदिते कमलानि तथा रवौ
सरसि यान्ति मुदं विमलाम्बुनि ॥१७॥

कुमुदिनी मलिना रजनीकरे
भवति पश्चिमपर्वतसंस्थिते
शरदि वारिदवृन्दलये यथा
मलिनता मधियाति शिखिस्वरः ।।१८।।

शरदि भाति मही विमला प्रिया
तरुणवृन्द मतः परिदीव्यति
सुखितचित्ततयोपवनेऽजिरे
स्वसखिभिः सह चापि निकेतने ।।१९।।

मशकदंशसमूह उपप्लवः
शरदि नात्र रुजास्पदमक्षिकाः
बहुविधा घनकालजजन्तवो
न च सतां हृदयेऽवगुणा यथा ।।२०।।

हरिमनः शरदश्छविसान्द्रतां स्मितमुखः पथि तामवलोकयत् ।
मुदमगान्मथुरां मधुरां प्रभू रथमधिष्ठित आव्रजति स्म च ।।२१।।

अवति जगद् य इदं सततं
व्रजवसुधापतिनन्दसुतो
मम विमला सुदृढा हृदये
वसतु सदैव हि तस्य रतिः ।।२२।।

साहित्याचार्य-सांख्ययोगाचार्य डॉ० रमेशचन्द्र शुक्ल कृत श्रीकृष्णचरित-
महाकाव्ये शरद्वर्णनं नाम द्वितीयः सर्गः

# तृतीयः सर्गः

आगम्य कृष्णो मथुरां सबन्धुः
पुरीं सुरम्यां परिवीक्षितुं तां
याति स्म शीघ्रं हृदयप्रसन्नः
सतां सखा कल्मषसक्तशत्रुः ॥१॥

प्राकारदीप्रां परिखापरीतां
महाकपाटां सुभगो विशालां
सुतोरणां गोपुरतुङ्गयुक्तां
प्रैक्षिष्ट कृष्णोऽतिमनोज्ञरूपाम् ॥२॥

नानाविधानेकसुगन्धपुष्प-
फलप्रियालंकृतपत्रभव्य-
द्रुमालिसंसेवितहृद्यदिव्या-
रामस्य दृष्टा सुषमा हि तेन ॥३॥

चतुष्पथैर्बन्धुरहेमहर्म्यैः
रम्यैः सभासदमभि रर्थभाजां
गृहैर्विशालैर्मणिरत्नवद्भिः
संभूषितां तां स पुरीं ददर्श ॥४॥

उपस्कृते निष्कुटनव्यहृद्यै
मुक्तासृजां राशिभि र्रचितेऽलं
प्रभूतसद्विद्रुमराजिभिस्सः
प्रैक्षिष्ट वेदीं बलभीञ्च तत्र ॥५॥

रुजापनोदाय महाचिकित्सा—
शालाश्च दिव्या बहुवाहनानां
स्थलानि सर्वत्र विरेजिरे च
लोकोपकाराय च वस्तु तत् तत् ।।१२।।

सरोऽरविन्दैश्च निषेव्यमाणं
कारण्डवैः सारसपक्षिभिश्च
विभूष्यमाणं बहुमत्स्यमत्सी-
रम्यं तयोः प्रीणयति स्म चित्तम् ।।१३।।

शचीशचापद्युति माततान
सूद्यानसौन्दर्यसहस्रधार
श्चलन् स उच्चैः क्षिपतिस्म नीर
माशासु दूरेऽपि च सीकराभाम् ।।१४।।

सौदामिनीदीपततिप्रकाशः पुरे चकास्ति स्म च चारुताभृत्
स द्योतयामास सरांसि कुञ्जान् समस्तवापी प्रभृतिस्थलानि ।।१५।।

वृहद् वृहत्पेशलमल्लशाला
स्तत्र व्यराजन्त पुरे च लघ्व्यः
प्रभूतमल्ला बहुला युवानः
स्वाभ्यासलग्ना अभवंश्च दृष्टाः ।।१६।।

खेलास्थले बालकबालिकाश्च
विचित्रनानाकरणैः सुखेन
क्रीडासु लग्नाः पुरि वीक्षिताश्च
मनः प्रमोदप्रदभूयसीषु ।।१७।।

जलेन सिक्ता अभवंश्च तत्र
रथ्याः समस्ता अपि राजमार्गाः
मयूरपारावतकीरसारी-
वृन्दस्य शब्दो मधुरः श्रुतोऽभूत् ।।६।।

द्वारेषु कीर्णानि च तत्र लाज-
यवप्रसूनानि शुभार्थकाणि
वारिप्रपूर्णाः कलशाः स्थिताश्च
सपल्लवा गन्धदधिप्रपन्नाः ।।७।।

सुशोभिता द्रव्यविशिष्टभाजो
बभ्राजिरे सन्तत मापणाश्च
भृशं विभिन्ना धनधान्यवन्तो
नाना विचित्रा वणिजां बहूनाम् ।।८।।

वासांसि रत्नानि च भूषणानि
महर्घवस्तूनि मनोहराणि
वैदूर्यवज्रामलनीलराशिः
स्थिता अभूवन्नपि विक्रयाय ।।६।।

क्वचिद् बहूनां महतां च तत्र
भाति स्म राशिः प्रियपुस्तकानां
क्वचिच्च यन्त्राणि बहून्यजस्रं
विक्रेतु मासन् विपणिस्थितानि ।।१०।।

यन्त्रालयाः शिक्षणमन्दिराणि
प्रदर्शनागारमहाद्भुताश्च
न्यायालयाः पुस्तकसद्म-चित्र-
गृहा व्यराजन्त च यत्र तत्र ।।११।।

रुजापनोदाय महाचिकित्सा—
शालाश्च दिव्या बहुवाहनानां
स्थलानि सर्वत्र विरेजिरे च
लोकोपकाराय च वस्तु तत् तत् ॥१२॥

सरोऽरविन्दैश्च निषेव्यमाणं
कारण्डवैः सारसपक्षिभिश्च
विभूष्यमाणं बहुमत्स्यमत्सी-
रम्यं तयोः प्रीणयति स्म चित्तम् ॥१३॥

शचीशचापद्युति माततान
सूद्यानसौन्दर्यसहस्रधार
श्चलन् स उच्चैः क्षिपतिस्म नीर
माशासु दूरेऽपि च सीकराभाम् ॥१४॥

सौदामिनीदीपततिप्रकाशः पुरे चकास्ति स्म च चारुताभृत्
स द्योतयामास सरांसि कुञ्जान् समस्तवापी प्रभृतिस्थलानि ॥१५॥

वृहद् वृहत्पेशलमल्लशाला
स्तत्र व्यराजन्त पुरे च लघ्व्यः
प्रभूतमल्ला बहुला युवानः
स्वाभ्यासलग्ना अभवंश्च दृष्टाः ॥१६॥

खेलास्थले बालकबालिकाश्च
विचित्रनानाकरणैः सुखेन
क्रीडासु लग्नाः पुरि वीक्षिताश्च
मनः प्रमोदप्रदभूयसीषु ॥१७॥

विश्रामशालाः अपि धर्मशालाः
सुपावना भोजन-पानशालाः
हृद्या विहारा बहुला विशालाः
विलोकिता स्तत्र च चित्रशालाः ।।१८।।

विरेजिरे दिव्य महान्ति यत्र
श्रेष्ठानि लक्ष्मी-शिव-विष्णु-गौरी-
सरस्वती-कुञ्जरवक्त्र-दुर्गा-
ब्रह्मादिकानां बहुमन्दिराणि ।।१६।।

प्रपां मठाँस्तौ वटु-साधुसंघान्
व्याख्यानमञ्चांश्च विधानसंसत्
विद्यालयान् लोकसभाञ्च गोष्ठान्
विलोकयाञ्चक्रतु राश्रमां स्तौ ।।२०।।

विलोकिताभूद्‌धयकुञ्जराणां
विशालसंख्या परमोत्तमानां
क्रमेलकानां रथवाहनानां
सैन्यालये चायुधभीषणानाम् ।।२१।।

सम्पत्ति सौन्दर्यकलासनाथे
विलोक्य तत् तद् नगरे हि तत्र
रामश्च कृष्णः सुतरां तदानीं
मुदं प्रयातौ वसुदेवपुत्रौ ।।२२।।

पुराङ्गनाः कृष्णविलोकनार्थं, प्रीत्या गृहानारुरुहुश्च शीघ्रम्
औत्सुक्यवत्यो नितरां तदानीं विसस्मरुः किं क्व कथं हि कार्यम् ।।२३।।

कयापि चैकं श्रवणं व्यधायि
संभूषितं कुण्डलभूषणेन
कयापि चैकः कर एव सद्यः
श्चालकृतः सुन्दरकङ्कणेन ।।२४।।

अङ्घ्रिस्वमेकं धृतभूषणं च
चकार काचिन्न च सा द्वितीयम्
आनञ्ज काचिन्नयनं स्वमेकं
न सा द्वितीयं त्वरयैव बाला ।।२५।।

विहाय काचिन्निजभोजनं च
सानन्दचित्ता वसुदेवसूनु
मधावत प्रेक्षितु मङ्गना तम्
उत्थाय काचित् स्वपनाच्च योषा ।।२६।।

स्नानं विना कापि च पद्मनेत्रा
ह्यधावत स्नेहसुचर्चिताङ्गी
श्रीकृष्णचन्द्रस्य विलोकनाय
निपाययन्ती च पयः शिशुं स्वम् ।।२७।।

विलोक्य कृष्णं पुरचन्द्रमुख्ये
जग्मु स्तदानन्द मनन्त मेव
मुदं नितान्तं हृदयं हि तासा
माप्नोच्च लोकोत्तरशान्तिदात्रीम् ।।२८।।

ययु र्न तृप्ति समयं चिरं ताः
सम्प्रेक्षमाणा मथुरा-मृगाक्ष्यः
ततो न पूर्वं धृदयेक्षणेऽत्र
याते सुखं तादृशमेत्र लोके ।।२९।।

तासां तदा जीवन माप्नुते स्म
मुनीश्वराणा मिह मुक्तिभाजां
ब्रह्मात्मसौख्यं नितरां विचित्रं
वचोमनोबुद्धिपरात्मगम्यम् ।।३०।।

अभत् तदा लोचननिर्निमेषं, जातञ्च चेतो गतिहीनमुग्धं
गिरा न चैकं पद मेव वक्तुं, शेकेऽपि तासां नगराङ्गनानाम् ।।३१।।

चक्रुश्च पौरप्रमदाः सहर्षं
मुहुर्मुहु र्मञ्जुल पुष्पवर्षां
बलस्य कृष्णस्य च वन्दनायै
अम्भोजमुख्यो वरगौरवर्णाः ।।३२।।

लीलाः श्रुता मानसमोददात्र्यश्
चिरान्मनोज्ञा कमलेक्षणा या
आनन्दमूर्ते रनिशं हि यस्य
विलोक्य तं ता अभवंश्च धन्याः ।।३३।।

अवाप्य सर्वा निजजीवनं ताः
श्लाघ्यं कृतार्थं सफलं भृशं तम्
अवागमन् मन्मथनष्टगर्वं
सन्तापविध्वंसककृष्णचन्द्रम् ।।३४।।

पुष्पाक्षताम्भोदधिगन्धमाल्यै
रुपायनैः पौरजनाश्च विज्ञाः
क्षोणीसुराः क्षत्रियवैश्यशूद्राः
प्रीत्या च भक्त्या नितरां तमार्चन् ।।३५।।

विलोक्य ते तं सकलाः स्वभाग्यं
जन्म स्वकीयं भुवि मेनिरे च
श्लाघास्पदं पुण्यकृतां च मध्ये
मणिं जगत्याः शिरसोललामम् ॥३६॥

पौरा अभाषन्त किमाचरंस्ताः
तपोऽवदातं व्रजगोपगोप्यो
यासां समीपे वसतिञ्चकार
लोकोत्सवो बन्धुसहायकृष्णः ॥३७॥

श्रेष्ठैर्दुकूलै र्नवभूषणैश्च
पुरे तदा तौ भुवनाभिरामौ
मान्या महान्तोऽतिमुदा च भक्त्या
सभाजयामासु रुभौ हि पौराः ॥३८॥

ततश्च कृष्णो बलबन्धुयुक्तो, भव्यां धनुर्यज्ञभुवं मनोज्ञाम्
उपेयिवान् शीघ्रतया सहर्षं, तां वीक्ष्य चित्तम् मुमुदे तदीयम् ॥३९॥

सुरक्षितं वीरभटै रजस्रं
ध्यानेन तच्चापगुरुप्रकृष्टं
बिना श्रमं भूभुवनाभिरामो
जग्राह कृष्णोऽतुलशौर्यसिन्धुः ॥४०॥

सलील मुत्थाप्य धनु र्महत् तत्
सज्यं विधाय द्रुत मेव कृष्णो
बभञ्ज चाकृष्य इव द्विपेन्द्रः
सोऽम्भोजनालं बलवद्वरेण्यः ॥४१॥

शब्दोऽभवत् तस्य तदा दिशासु
धनु र्यदा तद् विदधौ स भग्नं
व्याप्तोऽम्वरे चातिभयङ्करः सन्
अभाययत् कंसमनश्च सोऽलम् ॥४२॥

तद्रक्षकाः कोपगता भवन्तो
ग्रहीतुकामा जगदुश्च तौ ते
बध्नन्तु च घ्नन्त्विति मन्दमेधौ
मदोद्धताः कंसमहीपभृत्याः ॥४३॥

दुर्बुद्धिदुष्टान् बलरामकृष्णौ
निजघ्नतु स्तान् नृपकंसभीत
सम्प्रेषितांश्चान्यभटप्रकृष्टान्
विना विलम्बं वसुदेवपुत्रौ ॥४४॥

कोदण्डभङ्गं भटरक्षिनाशं
निशम्य कंसोऽतितरा मकुप्यत्
ज्ञात्वा च तत्क्रीडित मेव सर्वं
तयोः स आश्चर्य मगाच्च भीतिम् ॥४५॥

ददर्श रात्रौ दिवसे च कंसो
घोराण्यनिष्टानि बहूनि मृत्यो
र्नितान्ततत्पार्श्वगतस्य भूपः
संसूचनाकारकदारुणानि ॥४६॥

लेभे न निद्रां निशि भूपकंसो, भवन् स भीतो मरणान्नितान्तं
प्रैक्षिष्ट सर्वत्र तदा स कृष्णं, स्वकालतुल्यं विचरन्त मेव ॥४७॥

उत्थाय भानूदयकाल एव
सोऽचीकरन्मल्लमहोत्सवं द्राक्
कंसोऽनुगैस्तोरणपत्रपुष्पै
रलंकृतां तत्र च रङ्गशालाम् ॥४८॥

भेरीनिनादैः प्रियतूर्यशब्दै
र्दिशा अपूर्यन्त धरा नभश्च
गन्धोऽपि वातिस्म मनोऽभिराम
स्ततोऽभवल्लोचनमोददाभा ॥४९॥

उपाविशन् भूरमणाद्यमात्या
पौराश्च भद्राः सुखदासनेषु
चामन्त्रिता जानपदा महान्तो
यथोचितेष्वादरपूर्वकञ्च ॥५०॥

उल्लास शब्दः प्रससार दिक्षु
श्रुतान्यभूवन् बहुवादनानि
बभूव नेत्रश्रुति मोददात्री
स्फूर्जत्प्रभापेशलरङ्गशाला ॥५१॥

मदोद्धतौ तोषलमुष्टिकौ च
चाणूरकूटादिशलाः प्रमत्ताः
उपाविशन् मञ्जुलवाद्यशब्दै
श्चित्तप्रसन्नाः सकलाश्च मल्लाः ॥५२॥

नन्दादिगोपा वसुधाधिपाय
निवेदयामासु रुपायनानि
निमन्त्रणं प्राप्य निजासनानि
कंसस्य चाध्यासत ते ह्युपेताः ॥५३॥

आकर्ण्य वाद्यम् बलरामकृष्णौ
समागतौ दैनिककृत्यमुक्तौ
आसाद्य रङ्गस्थल मीड्चशौर्य्यौ
द्वारि स्थितं कुञ्जर मैक्षिषाताम् ।।५४।।

अभर्त्सयत् हस्तिपकं हि कृष्णः, सोऽम्बष्ठ एतिस्म रुषं नितान्त
मतो द्विपेन्द्रं नुदतिस्म शीघ्रं मन्युञ्च तीव्रं नयति स्म तं सः ।।५५।।

कृष्णञ्च हन्तुं द्विरदः प्रमत्तो
रुषा तदानीं द्रवतिस्म भीमः
सम्प्रेक्ष्य तस्यातितरां जिघांसां
कृष्णः प्रचण्डा मवधीद् द्रुतं तम् ।।५६।।

शास्ता नृपाणां दुरितस्थितानां
स्मरोऽङ्गनाना मशनिश्च मल्ल-
वृन्दस्य कृष्णः स्वजनश्च गोप-
जनस्य पित्रोस्तनयः प्रियश्च ।।५७।।

कंसस्य मृत्युः परमेव तत्वं
मुनीश्वराणां प्रियदेवता च
भक्तस्य रङ्गं प्रययौ सबन्धु
र्गवां च धर्मस्य च रक्षकोऽसौ ।।५८।।

विलोक्य कृष्णं बल मग्रजं च
रङ्गस्थिता नागरभूमिपालाः
प्रमोद मीयु र्भृश मेव सान्द्रं
तृप्तिं न जग्मु र्नयनैः पिवन्तः ।।५९।।

स्वजिह्वया तं लिलिहुस्तदेव
ते तं ह्ययजिघ्रन्निव नासया च
निजोरसा ते ध्रुव मालिलिंगु
स्तस्मिन्नस्निह्यम्निव तेऽतिकृष्णे ॥६०॥

परस्परं तद्गुणरूपलक्ष्मीं
हर्षेण सर्वे प्रशशंसु रित्थम्
इमौ हरे रंशतयेति जातौ
मन्यामहे श्रीवसुदेवधाम्नि ॥६१॥

व्रजेस्थितो भीषणदुष्टदैत्यान्
विघ्नान् प्रभूतानपि दारुणांश्च
निजघ्नतुः कृष्णबलाविमौ द्वौ
धन्या विलोक्याद्य वयं धरित्र्याम् ॥६२॥

ब्रुवत्सु पुंस्वित्थ मिदं भजन्तो ययु मंहत् ते प्रचुरं सुखञ्च
सन्तोऽतिरुष्टाः प्रबलाभिभानाः प्रमत्तचाणूरशलादिकूटाः ॥६३॥

प्रोञ्चुः करीन्द्रस्य हि तस्य नाशात्
कटुं वचस्तोषलमुष्टिकाख्यौ
अन्यो च सर्वे हतबुद्धिदुष्टाः
आरक्तनेत्राः कटुशब्दजिह्वाः ॥६४॥

उभावपि ग्रामनिवासवन्ता
वागच्छतं क्षिप्र मितो युवां हि
स्वमल्लतां दर्शयतं कठोरा
मस्मास्विदानी बलनिन्द्ययुक्ताम् ॥६५॥

वचः कठोरानुचितं निशम्य
श्रीरामकृष्णौ नितरां हसन्तौ
ततश्च हन्तुं कुरुतःस्म बुद्धिं
तांस्तावघासक्तनृपस्य मल्लान् ॥६६॥

स्वीकृत्य मल्लत्वमथ प्रचण्डं
वभूवतु स्तेषु तदा प्रवृत्तौ
कर्त्तुं च युद्धं बलरामकृष्णौ
विनाशकं मल्लमहाधमानाम् ॥६७॥

चाणूरमल्लं निजघान कृष्णः
शलोद्धतं तोषलकञ्च जन्ये
रामोऽवधीन्मुष्टिककूटमल्लौ
पलायिताः शेषभटाश्च युद्धात् ॥६८॥

शशंस कोपाकुलचित्तकंसो
बलञ्च कृष्णं त्वरमा धरन्तु
बध्नन्तु नन्दं च हरन्तु तस्य
धनं समस्तं च सगोपवृन्दम् ॥६९॥

क्षिप्रं मदीयं पितरं च नन्दं
तमुग्रसेनं वसुदेवधृष्टं
मुञ्चन्तु नो जीवितवन्त मद्य
जजल्प कंसो नृपमेवमेव ॥७०॥

कंसं तदानी मसिपाणिदुष्ट मितस्ततस्तं त्वरया भ्रमन्तं
श्रीकृष्णचन्द्रो गरुडो यथाहिं कचेष्वग्रगृह्णादधमं प्रसह्य ॥७१॥

निपात्य कृष्णः परुषं महीपं
रङ्गक्षितौ कंस महंश्च तत्र
ररक्ष लोकं च कठोरभूपात्
न्यायप्रियः सत्पथगामिभक्तः ॥७२॥

आश्वास्य कृष्णो नृपयोषितश्च
व्यधापयत् कंसहतस्य कर्म
चान्त्यं ततोऽसौ पितरौ स्वपूज्यौ
अमूमुचद् वन्दिगृहाच्च शीघ्रम् ॥७३॥

प्रणेमतु श्चादरपूर्वकं तौ
संस्पृश्य पादौ शिरसा स्वमित्रोः
शुभाशिषं तावथ विन्दतःस्म
शीलाभिवन्द्यौ विनयाभिरामौ ॥७४॥

जगति सतत मस्मिञ्जीवनं यापयन्तु
प्रबल विमलभक्त्या सेवमाना अजस्रं
स्वजनकमथ सर्वे मातरं स्वां च पुत्राः
उपदिशति य एतन्नौमि तं कृष्णमीशम् । ७५॥

साहित्याचार्य-सांख्ययोगाचार्य डॉ० रमेशचन्द्रशुक्लकृत श्रीकृष्णचरित-
महाकाव्ये कृष्णस्य मथुरागमनं नाम तृतीयः सर्गः

## चतुर्थः सर्गः

आश्वास्य पूज्यौ पितरौ मुकुन्दो
मातामहं स्वं यदुवंशजाना
मत्यन्तभक्त्या विनयातिनम्रो
भूपं स चक्रे तत उग्रसेनम् ।।१।।

पुंसां हि धर्मोऽस्त्यनिशं क्षमाया
माज्ञापराः स्यु र्नृपतेः शुभंयो
र्धर्मात्मनो नीतिमतो जगत्या
माज्ञा प्रदेया भवतः प्रजाः स्मः ।।२।।

एतं भवानाप्स्यति मेदिनीश
ह्याज्ञापरं स्वानुचरं यदूना
मेधेत नित्यं नितरां स्वराज्यं
यत्नोऽत्र नः स्यादिति पूर्ण एषः ।।३।।

त्रासाद् गतान् कंसनृपस्य वृष्णि-
दाशार्ह-यद्वन्धकवंशजातान्
अन्यांश्च वंश्यान् कुकुरान् मधूंश्च
प्रीत्या ततो वासमतिस्म कृष्णः ।।४।।

आश्वासनं प्राप्य विदेशवास-
सम्पीडितास्ते मथुरां स्वकीया
मागम्य कृष्णस्य सुखेन चोषु
र्लब्ध्वानुकूलानि सुसाधनानि ।।५।।

श्रीकृष्णचन्द्रो धनधान्यसम्पन्
नानाविधैश्वर्यं समृद्धिभिश्च
कृत्वा समृद्धान् सुखशान्तियुक्ता
नप्रीणयत् तोषयतिस्म तांश्च ।।६।।

प्रावाप्नुतां चातितरामसीमं
प्राज्यं प्रमोदं पितरौ स्वचित्ते
आराधनाभिः प्रियकृष्णसूनोः
शक्त्या धिया पावनचेतसापि ।।७।।

गोपाश्च नन्दः स्थविरोऽभिवन्द्यः
कृष्णस्य भक्त्याऽमितयानवद्यै
र्भावैः रसार्द्रैः परितोषमापुः
जाता वियोगेन च तस्य खिन्नाः ।।८।।

प्रस्थापिताः गोकुल मव्रजंश्च
कृष्णेन कैश्चापि तदा प्रकारैः
सर्वे च यै र्लोचनविन्दुधारां
मुञ्चन्त आप्ताः स्वजनाः प्रियेण ।।९।।

प्रस्थानकाले वसनैः फलैश्च
कृष्णो नवैः काञ्चनभूषणैश्च
ज्ञातींश्च सर्वान् बहुहेम पात्रै
श्चक्रेऽर्हयामास च सत्कृतांस्तान् ।।१०।।

प्रह्वो महान् प्रश्रयपुष्कलेन, सोऽप्रीणयत् स्वां जनतां कृपालु
र्योऽदर्शयच्चातिकृपां पुरैव कुब्जावराक्यां नतवायकादौ ।।११।।

सेवां समर्प्य प्रियपावनीं स्वां
सोऽतूतुषत् तां विदधौ सश्रद्धाम्
उत्थानमार्गाश्च कृता तदर्थं
निःस्वार्थभावेन स तां सिषेवे ॥१२॥

राज्यस्य सेवा मथ राष्ट्रसेवां
ग्रामस्य सेवां नगरस्य चापि
व्यक्तेः समाजस्य च यो विनैव
लोभं विधत्ते स जनोऽस्ति वंद्यः ॥१३॥

यज्ञोपवीताख्यशुभं स्वसून्वोः
संस्कार मत्यन्तमुदा ततश्च
शूरात्मजः क्षिप्रमकारयच्च
गर्गेण चाचार्यपुरोहितेन ॥१४॥

काले हि तस्मिञ्च्छुभभव्यशोभे
आचार्य गर्गाय च दक्षिणां सः
द्रव्यप्रभूता मददात् सहर्षं
गोहेमवासांसि च भूसुरेभ्यः ॥१५॥

विद्यार्जनार्थं बलरामकृष्णौ
वासं गुरोः सद्मनि चक्रतुश्च
प्रीत्या हृदा चाध्ययनेऽतिलग्नौ
संसेवमानौ स्वगुरुं हि भक्त्या ॥१६॥

सान्दीपनिं नैजगुरुं भजन्तौ
तौ रामकृष्णौ जगतः पुरस्ताद्
विद्यार्थिना मादरणीयरूपां
सेवोज्ज्वलां स्तुत्यतमां न्यधाताम् ॥१७॥

आसीद् गुरो राश्रमदर्शनीयो
वेदादिशास्त्राध्ययनाय पूर्णा
श्लाध्या व्यवस्था विललास तत्र
योग्याः प्रवीन्द्राः शतशो बभुश्च ।।१८।।

छात्राधिवासाय महन् महीयस्तुङ्गं मनोज्ञं सदनं विरेजे
विद्यालयोऽभूल्ललितो विशालो विद्याकलाध्यापनलब्धकीर्तिः ।।१६।।

उद्यानशोभा रुचिराभिरामा
चेतांसि जह्रे भृश मेव पुंसां
वृक्षा अनेके विविधाश्च तत्र
भव्याअभूवन् फलपुष्पपत्रैः ।।२०।।

क्षेत्रम् विशालं च कृते वटूनां
क्रीडार्थ मासीन्मृदुशष्प सेव्यम्
पूजानिमित्तेन बहुप्रकामम्
रेजेऽभिरामं शिवमन्दिरञ्च ।।२१।।

योगश्रिताः साधुतपस्विनश्च
प्राप्यन्त तस्मिन् ललिताश्रमेऽपि
दृष्टा अभूवन् बहुलाश्च गावः
सौम्याः कुरङ्गाः शुककोकिलाश्च ।।२२।।

शुभ्रं सरोऽम्भोजविभातिरम्यं
तस्याश्रमस्याति बभूव लक्ष्मीः
स्रोतःस्विनी तत्र च राजतेस्म
स्वच्छोदका पक्षिमनोभिरामा ।।२३।।

सम्प्राप्य सम्पर्कशुभास्पदञ्च
रामस्य कृष्णस्य च जीवनेष्टं
छात्रा अमन्यन्त जनुः स्वकीयं
धन्यं कृतार्थं सुभगं महीयः ॥२४॥

आचार्यवृन्दं निजशिक्षकत्वं
मेने प्रशंसास्पदसार्थकञ्च
तन्मानसं ब्रह्मसुखं जगाम
ह्यध्यापयत् तौ बलरामकृष्णौ ॥२५॥

वेदांश्च शास्त्राणि कलाश्च नीतिम्
अस्त्राण्यधीत्यातिमुदा प्रदाय
गुरुं प्रसन्नं प्रति दक्षिणां स्वा
मिष्ठां तदानीं पुर मागतौ तौ ॥२६॥

श्रेयो जगत्याः शिवधामकृष्णः, क्षिप्रं स्वकीयं सुहृदं सुधीन्द्रं
ज्ञान्युद्धवं प्रार्थयतेस्म यातुं, सन्देश मादाय च गोकुलं स्त्रम् ॥२७॥

प्रोवाच कृष्णः प्रियमित्र मेवं
गच्छोद्धव त्वं ब्रजगोकुलं मे
नन्दं यशोदां पितरं त्वमम्बां
सन्देशवाक्यै र्मम तोषयैतैः ॥२८॥

कार्यानुरोधा दिह साम्प्रतं मे
वासोऽस्ति कात्स्न्र्येन हि वाञ्छनीयः
चिन्ता न कार्या न च मानसं स्वं
सन्तापनीयं स्मरणानलेन ॥२९॥

गोपाङ्गनाः मद्विरहव्यथायां
मग्ना भवन्त्यो व्यथिताः इदानीं
ता उद्धर त्वं विरहव्यथाब्धेः
आश्वासय ज्ञानसुधासुवृष्ट्या ॥३०॥

स्वान्तं तदीयं मयि सक्तमस्ति
तासा महं जीवनमस्म्यभीक्ष्णं
सर्वस्व मेवास्मि सुखञ्च तासां
जानन्ति मां ताः परमेशमेव ॥३१॥

बुद्ध्या हि ता मा मवयान्ति नैजं
प्रेष्ठं च बोधन्ति मनोऽपि मां ताः
आत्मान मेवापि च मां सदैव
जानन्ति, तासा महमीश्वरोऽस्मि ॥३२॥

तास्त्वं तथा बोधय गोपकान्ताः
मां नो यथा ता अनिशं स्मरेयुः
ज्ञानेन तासां हर हृत्तमश्च
तासां वियोगाग्निजतापभीमम् ॥३३॥

उक्तः स इत्थं रथ मारुरोह
कृष्णेन धीमन्मणि रुद्धवोऽसौ
नन्दव्रजं काननमीक्षमाणः
प्रापद्यत श्रीयमुनाभिरामम् ॥३४॥

शृण्वन् मुकुन्दस्य चरित्ररम्यं, गीतं तदा गोपजनाङ्गनाभिः
विज्ञोद्धवोऽसौ मिलतिस्म नन्दे, सम्प्रेक्ष्य तं नन्दमनो ननन्द ॥३५॥

आपृच्छ्य चालिङ्ग्य भृशं तमार्चीन्
नन्दो भवन् प्रीतमना रनेकै
र्भोज्यैः पदार्थै र्मधुरैश्च पेयै
श्चादृत्य पप्रच्छ सुखोपविष्टम् ॥३६॥

कच्चित् प्रसन्नो मम शूरसूनु
र्मित्रैः स्वकीयैः स्वजनादिसर्वैः
कृष्णेन रामेण सहात्मजेन
कृष्णोऽपि नः संस्मरति व्रजस्थान् ॥३७॥

सर्वे प्रसन्नाः स्वजनाश्च तत्र
शूरात्मजः कृष्णबलात्मजाभ्यां
साकं भवन्तो भुवि पुण्यभाज
श्चित्तं हरीशे भवतां हि लग्नम् ॥३८॥

ज्ञात्वोद्धवं तं सुहृदं प्रियस्य
कृष्णस्य गोप्यो न्यगदन् प्रियाणि
चौतसुक्यवत्यो मधुरार्थवन्ति
वाक्यानि सन्देशहरं प्रणम्य ॥३९॥

कृष्णः प्रियो नः कुशली प्रधीन्द्र
पुर्यां वसन्नः स्मरणं करोति ?
जाता हि गोष्ठ्यां नगराङ्गनाना
मस्मत्परा कापि कदापिवार्ता ॥४०॥

सेयं नदी यत्र मुदा विजह्रे
शैलोऽस्त्ययं यच्छिखरे निषण्णः
प्रीतो भवन् वेणुरवं वितेने
गाः कानने चारयतिस्म चात्र ॥४१॥

चेतोऽस्मदीयं हरतिस्म कृष्णो
हासै रुदारै र्मधुरेक्षणैश्च
हंसस्य गत्या वचनामृतैश्च
सः सर्वदा नो विपदो जहार ॥४२॥

कृष्ण स्मरामः प्रियसुन्दरं त्वां, चित्तस्य चौरं ब्रजरक्षकं त्वां
गत्वा ब्रजादत्र चिराद् हरे किं, कार्या कृपा नागमनस्य गेया ? ॥४३॥

मातासि नस्त्वं जनकश्च बन्धुः
सर्वस्व मेवासि च नः कृपालो
ऽस्मांस्त्वं कथं विस्मृतवान् प्रयाय
दास्यो वयं जीवननाथ ते स्मः ॥४४॥

सन्देश मेतं भवदीयकृष्णः
प्रीत्या महत्या भवतीषु गोप्यः
प्रादाद् भवत्यो हृदयेन सर्वाः
शृण्वन्त्ववोचद् वच उद्धवोऽसौ ॥४५॥

आत्मा समेषा मह मेव वर्ते
नो सम्भवं चास्त्यत एव मत्तः
क्वचिद् वियोगः प्रियगोकुलस्य
शृण्वन्तु गोप्यो मम वाक्य मेतत् ॥४६॥

भूतानि भूतेषु यथा वसन्ति
प्राणेषु चित्तेन्द्रियपञ्चभूते-
षु व्याप्त एवास्मि तथेति वेद्यं
व्याप्तो गुणेष्वस्म्यपि किञ्च तेषाम् ॥४७॥

व्याप्तानि सर्वाण्यपि तान्यजस्रं
मय्येव, वासं सततञ्च तेषु
कुर्वेऽस्ति सत्यन्त्विद मेव बोध्यं
रूपेषु तेषा मह मेव राजे ॥४८॥

आश्रित्य माया मह मेव जाये
भूतेष्वथो तद्विषयः करोमि
भूत्वाश्रयः पालननाशसृष्टी
रात्मन्यहं स्वं स्वयमात्मनैव ॥४९॥

व्याप्तोऽस्मि सर्वत्र च निर्गुणोऽस्मि
संशोभितोऽहं भवतीषु नित्यम्
आतमस्वरूपेण भवत्सकाशे
विज्ञाय चैतन्न भवन्तु खिन्नाः ॥५०॥

आकर्ण्य तत् तस्य वचो हि गोप्यो, जग्मु र्नितान्तं प्रबलां व्यथां ताः
नीचै र्मुखाम्भोज मतो विधाय, नेत्राश्रुधारां रुरुदुः सृजन्त्यः ॥५१॥

गोपाङ्गना उद्धव मेव मूचुः
ग्रामाङ्गनाः स्मः सुमते प्रधीन्द्र
नो निर्गुणं ब्रह्म कदापि चित्ते
स्थातुं भवेच्छक्यमिदं ह्यरूपम् ॥५२॥

योगं व्रतं नो नियमादिकांश्च
कर्तुं वयं स्मो वनिताः समर्थाः
नानागुणांस्ताँस्तदपेक्षितांश्च
धर्तुं क्षमा नैव वयं कदापि ॥५३॥

मन्यामहे मूल्यवतीं न मुक्ति
सा वर्तते नो हृदयप्रिया नः
कृष्णप्रिये चित्त मिदं स्वकीय
मस्माभि रत्रत्यजने हृतं हि ।।५४।।

श्रीकृष्णपादाम्बुजयोः स्वमेतत्
प्रीत्यार्पितं मानसमस्ति विद्वन्
नो तद् द्वितीयं विनियोजयेम
यन्निर्गुणे ब्रह्मणि हन्त तस्मिन् ।।५५।।

अस्माक मिष्टः प्रियकृष्ण एव
सोऽस्तीश्वरो नो दयितः स एव
मन्यामहे ब्रह्म तमेव कृष्णं
सर्वा वयं कृष्णवशंगताः स्मः ।।५६।।

न ब्रह्मवादो भवदीय एषः
कृष्णैकदेवे ब्रजगोकुलेऽस्मिन्
कृष्णैकसाध्य प्रभुकृष्णभक्ते
शक्नोति लब्धुं हि निजप्रतिष्ठाम् ।।५७।।

कृष्णं भवान् जीवनमस्मदीयं
ब्रूतां स आयात्विह दर्शनेन
कुर्यात् कृतार्थान् सकलान् जनान् नो
दीनार्तभक्ताखिलकष्टहारी ।।५८।।

उक्त्वेति गोप्योव्यरमंश्च कृष्णं, भूयः स्मरन्त्यो रुरुदुर्नितान्तं
सम्प्रेक्ष्य तत्प्रेम च भक्तिभावं, स्वामुद्धवो विस्मरति स्म सत्ताम् ।।५९।।

धन्या हि गोप्यो भुवि कृष्णलीलाः
सर्वात्मना कृष्ण मिमाः श्रयन्ति
संलब्धकृष्णामृतमानवा ये
व्यर्थो न किं वेदविधिस्तदर्थम् ॥६०॥

वृन्दावने गुल्मलता भवेयं
श्रीकृष्णभक्तिश्रितगोपिकाना
मङ्घ्र्यब्जरेणुं ह्यधिगन्तु मत्र
शश्वद् वसेयं शुभरम्यपूते ॥६१॥

वाञ्छन्निदं सः सततं सुखेन
चक्रे निवासं बहुवासराणि
सम्प्रीणयन् नन्दजनादिसर्वान्
गायन् मुदा कृष्णललामलीलाम् ॥६२॥

नीलाम्बुवत्याः अघनाशिकायाः
पूतोदकोल्लोलतरङ्गवत्याः
कूले यमस्य स्वसु रुद्धवोऽसौ
प्रातश्च सायं व्यचरत् कदापि ॥६३॥

कुञ्जे लताशीतलमञ्जुले सः
गुल्मेषु नानाविधवाटिकासु
नीपेषु कालञ्च करीरवृन्दे
निन्ये महत्या च मुदा कदापि ॥६४॥

सः सैकते यामुनपावनाच्छे
क्षेत्रेषु सस्यावलिबन्धुरेषु
जम्बूपलाशादिकपीलुपङ्क्त्यां
चिक्षेप गोष्ठेषु च नैजकालम् ॥६५॥

वृन्दं गवां तस्य मनो जहार
शब्दो वृहत् तक्रविलोडनोत्थः
आज्यं दधिक्षीररसादिकानि
वस्तूनि भूयस्तमतूतुषंश्च ।।६६।।

कृत्वा निवासं चिर मुद्धवोऽसौ, गन्तुं यदा स्यन्दन मारुरोह
नन्दो यशोदा सकलाश्च गोपाः, राधादिगोप्यश्च तदा ह्युपेताः ।।६७।।

कृष्णेऽस्मदीया प्रबला भवन्ती
वर्धेत भक्तिः सततं पवित्रा
चैतद् ब्रुवन्तः परमानुरागाः
सम्मानयन्तो बुध मार्चिषुस्तम् ।।६८।।

प्रीत्या ददुर्नन्दजनादिगोपाः
गोप्यश्च कृष्णाय बहूपदास्ताः
गृह्णंश्च ता गोकुलगोपगोपी-
नन्दादिकेभ्यः प्रचचाल धीमान् ।।६९।।

मार्गे पवित्रं निविडं मनोज्ञं
प्रेमस्मरन् गोकुलवासिनां सो-
ऽश्रुवद्भिः प्रपूर्णाक्षियुगो वृषेन्द्रो
रोमाञ्चितः सन् मथुरां प्रपेदे ।।७०।।

प्राहिणोद् यः प्रियं कोविदं माधवो
गोपिकानां सकाशे द्रुतञ्चोद्धव
प्रेमतत्व निधातुं पुरस्तस्य यः
सादरं नौम्यहं तं जगद्रक्षकम् ।।७१।।

साहित्याचार्य-सांख्ययोगाचार्य डॉ० रमेशचन्द्रशुक्लकृतश्रीकृष्णचरित-
महाकाव्ये कृष्णस्य मथुरागमनं नाम चतुर्थः सर्गः

# पंचमः सर्गः

अभूच्च चित्ते मुदितोऽथ कृष्णः
स्वमुद्धवं मोदगतं विदित्वा
व्रजस्थगोपीप्रियदिव्यभक्त्यां
प्रसन्नतां नन्दजनादिकानाम् ॥१॥

विचिन्तयन् पाण्डुतनूजवृत्तं
हरिर्न रात्रौ तमसावृताया
मसंख्यनक्षत्रलघुस्थिताया
मलब्ध निद्रां भयसेवितायाम् ॥२॥

सति प्रभाते जगदेकवंद्यो
विपश्चिदक्रूरमुपेत्य कृष्णो
न्यवेदयत् तं विनयेन मान्यं
स्वभक्तकष्टोदधितारणार्हः ॥३॥

भवान् हितार्थं कृपया प्रयातु
वयं प्रजाः पालनपोषणार्हाः
निषेवणीयोऽस्ति बुधेन्द्र नित्यं
स्दमङ्गलाकांक्षिमनोजनानाम् ॥४॥

न सन्ति तीर्थान्यपि दैवतानि
सुवर्णताम्रादिविनिर्मितानि
फलं प्रयच्छन्ति न सत्वरं स्वं
परन्तु सन्तो ददतेऽतिशीघ्रम् ॥५

भवान् हितार्थं कृपया प्रयातु
सुहृज्जनानां प्रियपाण्डवानां
गजाह्वयं स्वर्हिपितुर्गतत्वात्
प्रपीडितास्ते जननी च तेषाम् ॥६॥

प्रदाय जानातु तदीयवृत्तं
वरं न वा चास्ति वरं पितृव्य
विधाय वृत्तं विदितं च तेषां
यथोचितं स्यात् करणीयमेव ॥७॥

इयाय चाक्रूर मसौस्वसौधं
ततश्च सम्प्रेष्य बलोद्धवाभ्यां
सहातिशीघ्रं करुणार्द्रचित्तः
सुनीतिमार्गस्थ सुहृद्धितार्थी ॥८॥

समागतोऽक्रूर इतश्च शीघ्रं
गजाह्वयं तत्र सतां स वंद्यो
ददर्श भूपं धृतराष्ट्र मन्धं
पृथां च भीष्मं विदुरं च मान्यम् ॥९॥

कृपञ्च सद्रोण मसावपश्यत्
युधिष्ठिरं तत्प्रियबन्धुयुक्तं
मित्राणि चान्यानि च सोमदत्तं
सबन्धुदुर्योधनकर्णवीरम् ॥१०॥

चकार वासं भवने कुरूणां, दिनान्यनेकान्यवगन्तु मेत्र
नृपेण पाण्डोस्तनयेषु वृत्तं विधीयमानं धृतराष्ट्रनाम्ना ॥११॥

बभूव राजा धृतराष्ट्रसंज्ञः
खलाभिलाषानुगबुद्धिमन्दो
न्यधादसौ दुर्बल मेव चित्तम्
असत्सुतस्वान्तवशंवदश्च ॥१२॥

सुतास्तदीया विनये च शौर्ये
समस्तशस्त्रास्त्रधनुः पटुत्वे
धियं न्यबध्नन् मलिनां च निन्द्यां
विनीत सन्मानसपाण्डवानाम् ॥१३॥

कठोर वैरानलपूर्णदृष्ट्या
सबन्धुदुर्योधन ईक्षते स्म
वधाय तेषां विविधानुपायान्
अशिश्रियच्छाट्यनिषेव्यमाण ॥१४॥

विवेद चाक्रूर मिदं हि सर्वं
वसन् समीचीनतया मनस्वी
पृथैकदागत्य विषण्णचित्ता
स्वबन्धुमक्रूर मिद शशंस ॥१५॥

स्मरन्ति किं मां पितरौ स्वसारो
मदीयबन्धुप्रियबन्धुपुत्राः
प्रियाश्च सर्वे स्वजनाश्च सख्य
इदं वदन्ती च पुनः स्मरन्ती ॥१६॥

प्रियारविन्दायतपत्रनेत्रं
समस्त लोकाश्रय कृष्णचन्द्र
व्यथानिहन्तार मनन्तसत्वं
हलायुधं बन्धुसुत वरेण्यम् ॥१७॥

पितृस्वसुस्तौ स्मरतोऽपि पुत्रान्
अहं तदीयास्मि पितृस्वसेयम्
इहारितुल्यव्यवहारकृत्सु
कुटुम्बिषु क्लेशगताति दूये ॥१८॥

सह स्वपुत्रैः कुटिलोद्धताना, महं हि मध्ये पतितास्मि वन्धो
विषण्णचित्तास्मि विपद्गताहं, युवा मिदानी मवतं द्रुतं नः ॥१९॥

पुरः स्थितं कृष्ण मिवेक्षमाणा
विपद्विनाशक्षममार्तदीना
विलोचनाभ्याञ्च परित्यजन्ती
शशंस साचेति हरेऽश्रुधाराम् ॥२०॥

अव प्रभोऽस्मान् भगवन्निदानीं
विहाय कोऽन्यः परिपालकस्त्वां
यदैव कश्चिच्छरणं प्रपेदे
कृपामयस्तं त्वमहो अगौप्सीः ॥२१॥

इमान् विहीनान् जनकेन बालान्
स्मरन्निहागच्छ च पाहि कृष्ण
हरे समाश्वासय दीनबन्धो
इमे लभन्तां तव सान्त्वनाञ्च ॥२२॥

इदं वदन्ती नितरां रुरोद
महांस्तदाक्रूर सुधी यशस्वी
सुखे च दुःखे सम एव धीर
स्तस्याः सुतानां वल मुद्धवोऽपि ॥२३॥

निवेद्य चाश्वासयतः स्म सम्यक्
पुनः पुनस्ताम्प्रति सान्त्वनाञ्च
प्रदाय शीघ्रं धृतराष्ट्रपार्श्वे
समागतौ तौ वुधसंघमान्यौ ॥२४॥

सुतेषु धत्ते धृतराष्ट्रभूपः
स्वकीयसर्वेषु हि पक्षपातं
वसन्नवेदीन्मतिमांस्तदेदम्
अतः स इत्थं क्षितिपाल मूचे ॥२५॥

स्वबन्धुपाण्डौ सुरलोकयाते
भवानिदानीं वसुधाधिपोऽस्ति
क्षितिं हि धर्मेण नयेन रक्ष
प्रजाः स्वशीलेन च रञ्जय त्वम् ॥२६॥

न चेत् कृतं भूरमण त्वयेदं, गमिष्यसि त्वं नृपते जगत्यां
नितान्तनिन्दा मयशश्च शोच्य, मतः संमत्वे चर सर्वथैव ॥२७॥

सुतांश्च पाण्डो रव पूज्यतात
इवानिशं त्वं निजसूनुतुल्यान्
अवेहि राजंस्तनया निमांश्च
हृदा स्वकीयान् परिमुच्य भेदम् ॥२८॥

न मर्त्यलोके वसतिं विधत्ते
सदैव कश्चित् सह केनचिच्च
शरीर मेतद्धि कदापि गच्छेत्
नचान्यसम्पत् सुखभोगवस्तु ॥२९॥

प्रसूयते जन्तु रिहैक एव
जहाति देहं च स एक एव
भुनक्ति भोगान् सुखदु:खयुक्तान्
सदा स एको भुवि भूमिपाल ॥३०॥

वयं त्वदीया अव नः सदैव
निगद्य चैतत् सकलं हरन्ति
जना धनं तस्य तथैव जन्तून्
कृशान् हि तोयस्थितजन्तवोऽप्सु ॥३१॥

अवन्ति पुष्णन्ति न सः स्वयं हा
विधाय दुष्कृत्य मपि प्रभूतं
त एव मुञ्चन्ति हि तान् स्वकीया
तृणेन लोष्ठेन समांश्च मत्वा ॥३२॥

जनास्तु मुञ्चन्ति न स. स्वयं हा
स्वकीयधर्मं परिपाति मन्दो
निधाय शीर्षे दुरितस्य भारं
प्रयात्यशान्तो नरक प्रगाढम् ॥३३॥

इदं जगत् स्वप्न इवास्ति राजन्
अतः प्रयत्नेन मनो निरुन्द्धि
स्थितः समत्वे नय जीवनस्वं
न पक्षपाती भव धर्महेतोः ॥३४॥

गिरासु कल्याणमयीषु तेन, सतीषु चोक्तास्वपि सर्वथैव
मनीषिणाक्रूर हितेन नाप, परं सुबुद्धिं धृतराष्ट्र राजा ॥३५॥

विनाश माकाङ्क्षति वीक्षितुं हि
कुलस्य राजेति विचार्य धीमान्
प्रस्थानकाले विदुरादिसत्सु
मिमेल सोऽक्रूर उदारचेताः ॥३६॥

उपेत्य रम्यां मथुरा मवादीद्
असौ सुधीन्द्रो धृतराष्ट्रराज्ञा
विधीयमानं व्यवहार निन्द्यं
सुतेषु पाण्डोर्बलरामकृष्णौ ॥३७॥

अन्यायासक्तान् कुवर्मस्थमर्त्यान्
अर्थोन्मत्तान् कल्मषाश्लिष्टबुद्धीन्
लोके यः कृष्णो जनुः शासितुञ्च
जग्राहास्मिंस्तं नमामीश मीड्यम् ॥३८॥

साहित्याचार्य-सांख्ययोगाचार्य डॉ० रमेशचन्द्रशुक्लकृतश्रीकृष्णचरित-
महाकाव्ये अक्रूरस्य हस्तिनापुरगमनं नाम पचमः सर्गः

## षष्ठः सर्गः

वैधव्यं सुतयोर्मुखादुगमितयोः कृष्णेन कंसो हतः
आकर्ण्येति वृहद्रथस्य तनयः क्रुध्यन् समग्रान् यदून्
हन्तुं क्षिप्र मसौ चकार कुमति र्भीमां प्रतिज्ञां तदा
चादाय स्ववरूथिनी मथ जरासन्धश्च योद्धुं स्थितः ॥१॥

विंशत्या तिसृभिश्च दारुणबलः सोऽक्षौहिणीभिः सह
क्षिप्रं यादवशूरसेव्यमथुरां रुन्द्धे स्म वीरोद्भटो
दृष्ट्वा तद्बलमागतं सुविदितं कृष्णस्तदा व्याकुलान्
बन्धून् ज्ञाति जनांश्च सर्वमनुजान् प्रापातिचिन्तावृतान् ॥२॥

सन्नद्धो भवति स्म योद्धुमजिरे संग्रामभूमे द्रुतं
श्रीकृष्णः सह बन्धुरामहलिना सेनां विशालां भृशम्
आदायावततार शस्त्रविविधै रस्त्रैश्च तीक्ष्णायुधै
र्नाराचैः समलंकृतश्च धनुषां भूत्वा रथाधिष्ठितः ॥३॥

आकर्ण्य ध्वनि भीषणं रणभुवि श्रीपाञ्चजन्यस्य च
सैन्यानां हृदि भीतिवेपथु रभूत् सम्प्रेक्ष्य सेना तदा
शत्रो र्व्याकुलमानसा च समरक्षेत्रेऽत्यगम्यं पुरः
श्रीकृष्णस्य बलोत्तमं जगति तत् साम्यंन्यधान्नोक्वचित् ॥४॥

शत्रो र्वीरभटाः क्षिपन्ति निशितान् वाणानसुग्राहिणः
सैन्येषूद्धततां गता बहुविषव्याप्तान् कठोरानिति
सम्प्रेक्ष्याखिल वैरिवीरदलने सामर्थ्यवांश्चापभृत्
श्रीकृष्णोऽरिषु तिग्म शायकतते र्वर्षाञ्चकार द्रुतम् ॥५॥

चिच्छेदारिवलस्य वाणनिचयैस्तीक्ष्णैर्भटानां भृशं
श्रीकृष्णस्तरसा शिरांसि धरणीं रक्तां व्यधात् सत्वरं
दुष्प्रेक्ष्याः सरितः कबन्धकलिता रक्तोदकै र्भीषणाः
जाता दृष्टिगताश्च कुञ्जरहयव्यापादिता स्तत्क्षणे ॥६॥

वीराः शत्रुबलस्य भीतिविपुलां प्राप्ताश्चमूनायकाः
कृत्वा तीव्रपलायनं च समयं प्राणानगोप्सुस्तदा
पातुं युद्धमहाजिरात् कथमपि प्रापुः स्वकीयानसून्
ते भीता भृशकम्पिता हि बलिनोगुप्तस्थलं शिश्रियुः ॥७

सूतास्तत्रहताः प्रसिद्धरथिनो नीता विनाशं हयाः
जाता युद्धरथा अतश्च विफलाः क्षोण्यां ध्वजाः पातिताः
पत्तीनाञ्च भुजाः शिरांसि च रणे जंघोरवः कन्धराः
छिद्यन्तेस्म जगत्स्तुतातुलगुण श्रीकृष्णवीरात्मना ।८॥

सेनाद्राङ्निहताः अरेश्च निखिलाः सैन्यैर्विहीनोऽभवत्
विख्यातो मगधाधिपो भुवि जरासन्धो रिपुर्भीषणो
हातुं तं न रणे कदापि मुसली जीवन्त मैच्छत् त्वरिं
कृष्णोऽनुग्रहवांस्तदा रणभुवः क्षिप्रं पलायिष्ट सः ॥९॥

युद्धार्थं महतीं भटोद्भटवतीं सेनां गृहीत्वाऽऽगतो
भूत्वासौ हि पराजितोऽपि च जरासन्धोऽसकृत् सत्वरं
संलेभे स जयं कदापि न नृपः कृष्णस्तु जन्यस्थितान्
वीरांस्तस्य सहस्रशश्च सुहृदो भूपानहिंसीद् भृशम् ॥१०॥

हन्तुं दुष्टनृपान् स नीतिनिपुणः कृष्णो जगत्याः प्रभुः
नो क्षुद्रं कुटिलं द्रुतं वलिजरासन्धं जघानाधमं
सञ्जाताः क्षितिपाः कुमार्गपतिता वीरा यदा चूर्णिताः
नीत्यासौ मगधेश्वरस्य हनने बुद्धिं ततोऽयूयुजत् ॥११॥

तत्काले तिसृभिश्च कालयवनो म्लेच्छैर्युतः कोटिभिः
आसाद्यत्वरया रूरोध मथुरां लोके महादर्पवान्
तं कृष्णो मुचुकुन्दगह्वरगतक्षोणीप्रसुप्तोत्थित
प्राचीनेन ददाह यादवपुरीं पातिस्मचेत्थं प्रभुः ॥१२॥

भूपाः अष्टशतानि भीषणतरे जन्याजिरे द्वेऽयुते
ये दुर्गेसकला मदोद्धतजरासन्धेन वै निर्जिताः
द्रोण्यां सानुमतः कठोरमनसा क्षिप्ता हि ते लीलया
कृष्णस्तांस्तरसा ततः सुकृतिनः सोऽमूमुचद् बन्धनात् ॥१३॥

सद्यस्तान् नृपतीन् स्वराज्य जनतां पातुं च धर्मेण सः
धर्मस्थापनकृत् स्थितान् नयपथत्राता विधायासने
इन्द्रप्रस्थपुरं प्रयातु ममलं चक्रे विचारं ततः
औदार्योज्ज्वलमानसो विधुमुखो विश्वस्य सम्पोषकः ॥१४॥

गन्तास्मि श्व इतो विचार्य भगवांच्छेतेस्म कृष्णो निशि
हेमन्ते निदधाति दीर्घतरतां शैत्यश्रिता शर्वरी
तस्मात् तां कृपणस्य याति न यथा तृष्णा विरामं तथा
नाप्येषेति विचारयन् हितमति र्निन्ये नयज्ञेश्वरः ॥१५॥

उत्तस्थावगमन् यदा विरलतां तारा नभोमण्डले
चन्द्रोऽस्ताचतामव्रजच्च सविता प्राचीं व्यधाच्छोभितां
सञ्जाता कुमुदावली गतविभाम्भोजानि लक्ष्मीं ययुः
वातिस्म प्रियमारुतोऽतिसुखदो गोविन्दनारायणः ॥१६॥

प्रातःकालविधीन् विधाय सकलान् पद्मेक्षणः स्यन्दनं
प्रीत्यारुह्य चचाल काननगतां संस्पन्दमानां श्रियं
हेमन्तेऽनुदिशं क्षितौ च गगने संशोभमानां प्रभां
चेतस्तस्य जगाम मोदममितं सम्प्रेक्ष्य रूपाञ्चिताम् ॥१७॥

सर्वत्रैव विलोकिताः प्रतिपदं ससेत्रमानास्तदा
वह्नि पीतपटाभिभूपितवपुः श्रीवत्ससंशोभिना
वृद्धा बालकबालिकाश्च तरुणाः प्रालेयवृद्धेर्जनाः
श्रीकृष्णेन विकम्पिताः सुमधुरं चोष्णं पिबन्तः पयः ॥१८॥

सञ्जातोऽतितरां प्रियो हिमवशात् सूर्यातपः सर्वथा
जातंभीतिकरं च शीतसलिलं स्नानं समस्याभवत्
उष्णं भोज्यमभूत् तदा सुखकरं पुंसां समेषां भृशं
काले शैत्यमये तदेव रुचिरं जातं न यच्छीतलम् ॥१९॥

ग्रामे वा नगरेऽरविन्दनयनेन प्रेक्षिता मानवाः
स्थूल क्षौमदुकूलकम्बलभृतस्तूलस्थवासोधराः
हेमन्तेन तदाभ्यभूयत जगज् जातं हि तत्पीडितं
तिर्यञ्चः पशवो नगाश्च तरवो मम्लुश्च बिभ्युर्लताः ॥२०॥

सूर्यं वीक्ष्य हि चक्रवाक इव सः शोभां हिमान्याः अपि
कृष्णोऽजायत सान्द्रमोदहृदयस्तं शैत्यजाता रमा
संसेव्यातितरां व्यधात् सुखमयं चेतः स्वकीयं तदा
कालं भावयतिस्म तं बहु तदोद्दिश्य प्रभुः केशवः ॥२१॥

ह्रस्वत्वाद् दिवसस्य कार्यनिवहः ससेधते पूर्णतां
काठिन्येन भृशं हिमावृतदिने हेमन्तकाले ध्रुवं
भानुः पश्चिमपर्वतं जवगतिः सन् सत्वरं धावति
जातोऽसावुदितः कदेति च गतोऽस्तं ज्ञायते नो जनैः ॥२२॥

नीहारो जगतीं करोति परुषां सस्यैः परं जायते
रम्या भूः विदधाति नेत्रमनसी पुंसां प्रमोदान्विते
सस्येष्ट्या नवया समर्च्य मनसा देवांश्च पितॄन् जनाः
जायन्ते गतकल्मषाः सुरुचिरे हेमन्तकाले शुभे ॥२३॥

हैमन्ते जनतान्नलब्धिविषया काङ्क्षा भृशं तृप्यति
गावः प्राज्यपयः प्रदाय जगतीं प्रीणन्ति चास्मिन् ऋतौ
वीक्ष्यन्ते तरुणाः प्रसन्नमनसः क्रीडासु लग्ना अपि
मन्येऽयं मधुरातिसुन्दरशुचिः कालो जगत्या महो ।।२४।।

मार्तण्डो यमशोभितांह्रिककुभं संसेवते साम्प्रतं
तस्मात् सापि दिशा बभूव ललिता लोकानुरागाधिका
सौन्दर्यात् प्रियतां प्रयाति ललनातुल्या हि चास्मिन्भवे
कृष्णस्तत्र विलोक्य वर्त्मनि भृशं भावेष्वभीक्ष्णं स्थितः ।।२५

स्वां शोभां लभते तुषारमलिना ज्योत्स्ना नमन्दामपि
नीहारावृतभास्करोऽपि मलिनो भूत्वेव संदृश्यते
चन्द्रः सम्प्रति किञ्च मञ्जुलविभां पुष्णन्ति नम्राधिकाः
स्वर्णाभाः प्रियशालयोऽपि नितरा मस्मिन् हिमानेहसि ।।२६

वायुर्वाति हिमश्रितः प्रकृतितोऽसह्यो महाञ्छीतलो
गोधूमैश्च यवै र्विभान्ति सुतरां क्षेत्राणि वाष्पाम्बरा-
च्छन्नानि क्षितिमण्डले च बहवः क्रौञ्चाः खगाः सारसाः
कृत्वा तत्र रवं प्रियं दिशिदिशि स्वं तेकिरन्ति स्वयम् ।।२७

नद्यो वाष्पसमूहविद्धसलिला लब्ध्वा श्रियं कामपि
शोभन्तेऽतितरान्तदा सुविमलैस्तोरैः स्वकीयैः प्रियै
र्जायन्ते च हिमाद्रसैकतसितै स्ताभिश्च नूनं विभां
कान्तारं निदधाति नेत्रहृदयोल्लासप्रदां साम्प्रतम् ।।२८।।

अम्भोजानि भवन्ति सम्प्रति हिमध्वस्तानि जीर्णान्यपि
तत्पत्राणि च शीर्णकेसरधनैश्वर्याणि नो यान्त्यतो
जायन्तेऽथ च कर्णिकाः क्षयगता नालावशिष्टानि च
तेषां दर्शनदुःखदानि शिशिरे कान्तारमध्येऽधुना ।।२९।।

हेमन्तस्य मनोऽभिरामसुषमां पश्यन्मुदा सत्वरं
श्रीकृष्णो हितमानसः शुभमति धर्मस्य संरक्षको
ह्यन्यायस्य विनाशकः सहृदयोऽधर्मप्रहर्ता प्रभुः
इन्द्रप्रस्थ महोज्ज्वलं सुललितं प्रापद्यतासद्रिपुः ॥३०॥

आगम्यासौ तनयेषु पाण्डुनृपतेः प्रीत्यामिलत् केशव
स्ते पाण्डोस्तनया विचिन्तितहृदोऽवोचन् जरासन्धकं
लक्ष्यीकृत्य तदा तदर्थमखिलं कृत्यं हि कार्यं स्वयं
व्यानक् तेषु न धर्मराजरचिते यज्ञे नयज्ञो हरिः ॥३१॥

नीतिं साधु विमृश्य कृष्णनयविद्भीमेन सार्धं ततः
प्रस्थानं कृतवान् प्रकृष्टबलभृच्छत्रु द्विपं केशरी
हन्तुं मत्तभटोद्भट हितमति श्चावातरत् सत्वरं
युद्धार्थं मगधेश्वरोऽपि समरे सेनां गृहीत्वोद्धताम् ॥३२॥

जन्ये मागधभूपति र्निजवलं प्रादीदृशद् भीषणं
साफल्यं न ययौ परं हतमति र्युद्ध्वापि कालं चिरं
नेतुं तम्प्रति चाह भीमवलिनं यत्नं स्म युक्तं ततः
कृष्ण स्तत्र तदेङ्गितेन तरसा भीमोऽत्रधीत् तं द्रुतम् ॥३३॥

सञ्जाते निहते रणे नृपजरासन्धे बभूव क्रतुः
निर्विघ्नः प्रबलः समस्तजनता भूपाश्च सद्वर्त्मगाः
प्रीत्या यज्ञमहोत्सवं गुरुतरं चक्रुर्जयं ते जगुः
श्रीकृष्णस्य सतूर्यवाद्यमधुरं ज्योतींषि तेनु र्भृशम् ॥३४॥

सर्वमेव सततं चराचरं
यः कृपालुहृदयः पिता हि नः
पाति पश्यति बिभर्ति सर्वथा
नौमि तं सुजनवत्सलं हरिम् ॥३५॥

साहित्याचार्य-सांख्ययोगाचार्य डॉ० रमेशचन्द्रशुक्लकृत श्रीकृष्णचरित-
महाकाव्ये जरासन्धवध नाम षष्ठः सर्गः

## सप्तमः सर्गः

कृष्णः पुरी मतितरां रमणीयदिव्यां
मध्येऽम्बुधेः परमरम्यविभां दधानां
लोके समस्तनगरीजयिनीं मनोज्ञां
संस्थापिता मथ चकार भवाभिवंद्याम् ॥१॥

सा'द्वारके'ति शुभसुन्दर नामधेयं,
लब्ध्वा भृशं भुवि समग्रपुरीः हसन्ती
विश्वाभिरामसुषमा मवदातरूपां
संशोभतेस्म दधतीह गुणानवद्याम् ॥२॥

विज्ञानवास्तुपरकं परिवीक्ष्यतेस्म
चातुर्यशिल्पविषयञ्च पफाल तत्र
तस्मात् पुरी जगति सा न निजोपमानं
धत्तेस्म लोकहितचारूपदार्थरम्या ॥३॥

रथ्या वभु र्बहुविधा विमला विशालाः
वीथ्यश्च तत्र रुचिरा बहुला विलेसुः
उद्यान चत्वर सुचारू विहारदेशा
स्तस्या मनोकहजुषो विबभु र्नगर्याम् ॥४॥

शृंगैः पुरी च गगनं स्पृशतिस्म हैमै
रट्टालिकाश्च भवनानि महोज्ज्वलानि
भान्तिस्म गोपुरविभा रमतेस्मतत्र
प्राकारभा विहरतिस्म सरत्नकूटा ॥५॥

सम्पत्तिरत्न मणिसस्य विलासवस्तु-
सन्दीपिता तुरगकुञ्जर राजिसेना-
विद्योतिताभ्युदय साधनभूषिता सा
शस्त्रास्त्र कौशलवती नगरी विरेजे ॥६॥

आसीत् पुरी सुदृढ़दुर्गवती समृद्धा
विज्ञानमन्दिरवती च कलाभिरामा
ज्ञानाश्रमै द्युँतिमती गुणवृन्दवंद्या
सा द्वारकेन्द्रनगरीं भृश मत्वशेन ॥७॥

रत्नाकरः प्रतिपलं निजवीचितोयै
र्नेनेक्ति पादयुगलं हृदयेन यस्याः
उच्चैश्च गायति रवै र्महिमानवद्यम्
अद्यापि धन्यचरितः स भुवीति मन्ये ॥८॥

शुश्राव तेष्वथ दिनेषु विदर्भराज—
श्रीभीष्मकस्य दुहिता गुणरूपशक्तीः
कृष्णस्य, तत्र हृदयं च ररञ्ज तस्याः
सा तं ववार हृदि भर्तृ तयात एव ॥९॥

सा प्राहिणोत् सपदि विप्रवरं सकाशे
कृष्णस्य चित्तगतभावविभावितं हि
सन्देश मीड्यमधुरं हृदि धारयित्वा
श्रीद्वारकां स गतवान् नगरीं विदग्धः ॥१०॥

विप्रं समागत ममुं हृदयेन भक्त्या
कृष्णोऽर्चतिस्म विनयेन च शास्त्ररीत्या
पप्रच्छ तं च स तदागमनस्य हेतुं
पादौ मृशंश्च सुधियः स्वकराम्बुजाभ्याम् ॥११॥

तद् रुक्मिणीकथित मभ्यदधात् स विप्रः
प्रीत्यास्पदं सकल मेव मनोज्ञरीत्या
सन्देशपत्र मथ सः प्रददौ प्रधीशः
कृष्णाय भक्तिनतमस्तक विज्ञवंद्यः ।१२।।

आकर्ण्य ते हृदयहारिगुणान् प्रिय त्वां
चेतोऽवरिष्ट मम भर्तृतया मुकुन्द
विद्यावयः कुल बलादिषु काऽद्वितीयं
त्वां ना वृणोत कुलजा समये कुमारी ।।१३।।

तुभ्यं प्रभुप्रिय मया तु समर्पिताऽहम्
आगम्य मामनुचरीं कृपयातिशीघ्रम्
अङ्गीकुरुष्व कुरु सम्प्रति नो विलम्बं
चैद्यः स्पृशेन्न हि यतस्व तथा हरे माम् ।।१४।।

गौरीं यदार्चितु महं भवनात् परश्व
स्तन्मन्दिरं प्रति भवेय मभिव्रजन्ती
त्वं मां हरस्व विधिना पथि राक्षसेन
पाणिं गृहाण मम विद्धि न चेन्मृतां माम् ।।१५।।

उक्त्वा स ओमिति ततो रथयोजनाय
कृष्ण स्तदा सपदि दारुक मादिदेश
विप्रेण सार्धं ममिताभमुखारविन्दः
क्षिप्रं विदर्भविषयं समुदं प्रतस्थे ।।१६।।

अप्रीणयद् विरलतारक पुष्करश्री
श्चन्द्रोऽस्तभूधरगतोऽव्यथयच्च चित्तं
प्रद्योतनस्य नितरा मुदयस्तु तस्य
प्रामूमुदद् यदुकुलाब्जरवे स्तदानीम् ।।१७।।

पद्माटवीं मधुलिहोऽतिसुखं प्रपन्नाः
मन्दारविन्द सुरभिश्रितमारुताश्च
फुल्लत्सरोजरुचिरञ्च सरः प्रकामं
कृष्णस्य चेतसि मुदोव्यकिरन्नितान्तम् ॥१८॥

विन्दंश्च मोदममितं प्रकृते विकासः
उच्चैः प्रभातसमये विहगाः क्वणन्तः
शोभां वनं सकल मेव दधत् प्रसन्नां
कृष्णं न्यषेविषत बन्धुर मम्बरञ्च ॥१९॥

कान्तारगप्रचुरमञ्जुलवल्गु रूपं
शोणप्रभा सुभगपुष्कर पेशलश्रीः
पुष्पाणि काननगतानि सुगन्धवन्ति
संसेव्य केशव ममंसत जन्म धन्यम् ॥२०॥

शोभैकतोऽतिसरसा मिहिरोदयस्य
चेतो व्यधात् सुमुदितं वसुदेवसूनोः
किञ्चैकतो वन विभाऽरमयत् तदानीं
कृष्णं महीरुहलतादिगतातिसान्द्रा ॥२१॥

पुँनाग-किंशुक-मधुद्रुम-कन्दपाल—
जम्बीर-वञ्जुल-पलाश-निकोचकाश्च
न्यग्रोध-विल्व-सहकार-मधूलकाश्च
शैलप्रियालपनसाः प्रियनागरङ्गाः ॥२२॥

सौवीरचञ्चलदलाः बहुजम्बुवृक्षाः
श्रीपर्णिका-तिलक-तन्दुक-नीपपङ्क्तिः
सालार्जुना दधिफला बहुकोविदाराः
अन्ये च शाखिविविधा विपिने बभुश्च ॥२३॥

शेफालिकाश्च कटजाः पिचुमन्दवेण्यो
बल्ल्यश्च भूरिकुसुमा लकुचावयस्थाः
जायाजपा-रुचक-चित्रकशोणपीताः
वासन्तिका च गणिका प्रियमाधवी च ।।२४।।

द्राक्षालतादिक वनस्पतयो विचित्राः
नानौषधानि बहुलानि हितव्रतानि
भान्तिस्म तत्र विपिने परिवीक्ष्य तानि
विन्दन् सहर्ष मखिलान्यगमद् विदर्भान् ।।२५।।

रामोऽत्रगम्य गमनं प्रति भीष्मकस्य
रम्यामितश्च नगरी मनुजस्य शीघ्रम्
आशङ्क्य जन्य ममितां परिगृह्य सेना
मायिष्ट साधनसमस्तसुसज्जितः सन् ।।२६।।

प्रत्युज्जगाम नृपति र्बलरामकृष्णौ
भूपो विदर्भविषयस्य तदा सहर्षं
दृष्ट्वा च तौ पुरनिवासिजनाः प्रसेदुः
स्याद् रुक्मिणीप्रियतमेति हरे रकाङ्क्षन् ।।२७।।

गौरीमितो भगवतीं नियते मुहूर्ते
सा रुक्मिणी सदनतश्चलतिस्म कृष्णं
दध्यौ च सार्चितु मनन्तबलाप्रमेयं
संरक्षिता प्रचुरवीरभटै र्महद्भिः ।।२८।।

सा रुक्मिणी गिरिसुता मभिवंद्य यस्मिन्
कालेऽधि रोढु मकरोत् स्वरथे विचारं
कृष्णस्तदैव विदधन्मलिनानरातीन्
संपश्यतां सपदि ता महरद् भटानाम् ।।२९।।

वृष्टि भयङ्कर कठोरतमां शराणां
भूत्वा समन्युहृदयाः अरयस्ततस्तु
चक्रु र्भृशं प्रहरणैश्च महाप्रहार
रामस्य सैन्य मपि तीक्ष्णशरान् मुमोच ।।३०।।

युद्धं हि तद् भवितु मारभतेस्म तिग्मं
रामः स्वकीय परुषेषुभि राशु शत्रून्
हन्तुं धियं च विदधौ भुवनैकवीरः
प्रावीवहत् स रुधिरस्य नदीं क्षणेन ।।३१।।

वन्धू तदा समरभीषणरामकृष्णौ
द्वौ युद्धदारुणधरां शतशः शिरोभिः
क्षिप्रं द्विषां बलवता मपि तस्तराते
भीताः पलायिषत शत्रुजनाः प्रचण्डाः ।।३२।।

सौदामनी नभसि जन्यभुवः शराणां
व्यद्योतत प्रतिपलं सकठोरशब्दं
युद्धाजिरे हयगजाश्च रथा अरीणां
छिन्नाः क्षितौ निपतिता निहताश्च भूत्वा ।।३३।।

खिन्नो निराशहृदयश्च पराजितःसन्
युद्धस्थलान् निववृते शिशुपालभूपः
प्राणेषु तस्य तु परं करुणां विधाय
जीवन्त मेव मुमुचे तमरिं मुकुन्दः ।।३४।।

कृष्णे बबन्ध नितरा मरिबुद्धि मेव
रुक्मी विदर्भनृपते स्तनयो मदान्ध
ऐच्छत् स्वकीयभगिनीं दयितां स कर्तुं
चैद्यस्य दुष्टमनसः शिशुपालनाम्नः ।।३५।।

आसाद्य पुण्यनगरीं घनवर्णकृष्णः
श्रीद्वारकां सुकृतिलोकसुहृत्कृपालुः
आजानुबाहुकमलाक्ष विशालवक्षाः
अत्युच्चकन्धरसुचारुचरित्रगेयः ॥३६॥

दूतं करूषनृपतेः परिवीक्षते स्म
धाष्ट्र्यान्वितं परममान्द्यमयं निशम्य
सन्देश मीड्यकुलनिन्दितपौण्ड्रकस्य
तस्माज्जहास ससदस्यजनो बलाब्धिः ॥३७॥

कृष्णस्य कृत्स्न मपमानमयं वचोऽसा
वाकर्ण्य पौण्ड्रकनृपस्य ययौ सकाशे
कृष्णोऽपि शीघ्र मरुणन् नगरीं च काशीं
यत्र स्वमित्र सविधे नृपपौण्ड्रकोऽभूत् ॥३८॥

सम्प्रेक्ष्य पीतवसनाभरणादिमन्तं
कृष्णः करूषनृपतिं समराजिरेऽसौ
वेषं स्ववेषसदृशं हि विलोक्य तस्य
काशीनरेशसुहृदा सह पौण्ड्रकं तम् ॥३९॥

प्रोवाच पौण्ड्रक ! हि दूतमुखेन यत् त्वं
मामब्रवीः हृदि निधाय तदेव कृष्ण
स्त्वय्यायुधानि मम सम्प्रति सन्त्यजामि
वाणान् निगद्य निशितानिति सम्मुमोच ॥४०॥

चक्रेण तस्य च शिरो नृपपौण्ड्रकस्य
चिच्छेद कृष्णभगवान् भुवि तत् पपात
वाणेन काशिनृपते स्तरसा चकर्त
कायाच्छिरो दुरितवर्त्मनिषेविणोऽपि ॥४१॥

पुत्रोऽथ काशिनृपतेः कृतवान् प्रसन्नं
यज्ञेन भूतपतिशंकर माशु लब्ध्वा
कृत्यां सुदक्षिण इतो हि ततोऽस्यति स्म
दुःखात् पितु र्हरिपुरीम्प्रति रोषचित्तः ॥४२॥

कृष्णः स्वक्रीयनगरीं जनतां च पातुं
चक्रेण तां द्रुततया व्यदधान्निवृत्तां
वाराणसी मपि ददाह सुदक्षिणं सा
सम्प्रेरिता प्रबलचक्रसुदर्शनेन ॥४३॥

श्रीद्वारका मधिवसन् नृपभीष्मकस्य
पुत्र्या समं सुरभिहृद्यमहीयसीं तां
द्रष्टुं बभूव परमोत्सुकमानसोऽतः
प्राज्यप्रभं ह्युपवनं प्रययौ सहर्षम् ॥४४॥

केशव मानसं सुविमलं मम भवतु हरे
तत् तव सेवतां सकलकल्मषहरचरणौ
आर्तजनार्तिनाशनपटुः परममृदुमनाः
सन्तत मेव पाहि कुपथाद् दयित जनमिमम् ॥४५॥

साहित्याचार्य-सांख्ययोगाचार्य डॉ० रमेशचन्द्रशुक्लकृतश्रीकृष्णचरित-
महाकाव्ये रुक्मिण्युद्वाहो नाम सप्तमः सर्गः

## अष्टमः सर्गः

आम्रेषु गन्धश्रितमञ्जरीमनो-
हृद्येषु कूजन्ति पिकाङ्गनाः प्रियं
पत्रैर्नवैश्चामरतुल्यचारुतां
संसेवमानैर्ललितेषु शाखिषु ॥१॥

शोभानवद्या परिवीक्ष्यतां प्रिये
वसन्तकालस्य नवीन मञ्जुला
लोको भवत्येष महोज्ज्वलश्रिया
ह्येतस्य नव्यप्रियतां गतो ध्रुवम् ॥२॥

वृक्षा रसालाः प्रियमञ्जु मञ्जरी-
गन्धेन सर्वे हरिताः सपल्लवाः
चेतांसि पुंसां प्रसभं हरन्नलं
कुर्वन्ति लोके मुदितानि साम्प्रतम् । ३॥

आम्रद्रुमाः पुष्पपराग सौरभै रामोदपूर्णा विदधत्यनारतम्
आशाः समग्राः अत एव सुन्दरि, हृद्यो वसन्तो जगतः कृते प्रिये ॥४॥

विश्वं समस्तं मलयानिलो मधा
वानन्दयँश्चेतसि सान्द्र पुष्कला
मुत्पादयन्नुत्सुकतां महीयसीं
प्रीणाति नूनं सुतरां मुहुर्मुहुः ॥५॥

उन्मीलितं नीरजवृन्दवन्धुरम्
आभात्यलं विस्तृतपत्रपेशलं
कान्तिप्रियं सौरभसेविते मधौ
स्वच्छोदरम्येषु सरसु रुक्मिणि ॥६॥

अस्मिन् ऋतौ कोमलमालतीलता
सुगन्धपूर्णैः सुमनोभरैर्भृशं
सञ्चारयन्ती मधुरां प्रसन्नतां
चेतः सु पुंसां सुतरां सुशोभते ॥७॥

इन्दोः कलायाः सुषमा मिव प्रियं
पुष्णन्निदानीं कलिकासु केसरं
रक्तं वसन्तेऽतितरां प्रदीप्यते
स्वं पश्य तं योऽस्ति वनेऽत्र किंशुकः ॥८॥

सद्यः प्रसूते कुसुमान्यनोकहो
भूयांस्यशोको नवपल्लवान्यपि
रम्यां प्रभूतां मृदुतां मनः प्रियां
संसेवमानानि दधच्च काश्यते ॥९॥

अत्यन्तरक्तानि वनेषु वक्रताम्
अस्मिन् पलाशानि मधौ चकासति
सम्प्रेक्ष्य मन्ये हृदयं विभेत्यपि
सम्प्रीयते तानि च संश्रिता नि च ॥१०॥

एते प्रियालद्रुममञ्जरीरजः—
पातेन दृष्टौ प्रचुर गता मृगाः
विघ्नं परं ते पवनस्य कानने
धावन्ति वेगेन पुरोऽतिचञ्चलाः ॥११॥

चित्ताक्षिप्रीतिप्रदपुष्पशोभिता
पत्रै र्नवीनै र्नितरां सुसेविता
हर्षप्रदा सौरभवन्दितांघ्रिका
पुंसो न कस्येयमहोद्य मल्लिका ।।१२।।

दृष्टिं क्षिपत्वं तिलकेऽत्र रुक्मिणि
सुगन्धमोदप्रदमञ्जरीम्प्रति
सुभ्रु द्विरेफावलिसेवितां मधौ
पुष्टां पवित्रेण च केसरेण ताम् ।।१३।।

चञ्चूं शुकः स्वामिह सन्निवेशयं
श्चारुवंकुरे, मंजुलकुञ्जवल्लरीः
मन्दः समीरो मलयस्य नर्तयन्
नो कस्य चित्तं धिनुते महीतले ।।१४।।

आशाभिरामा गगनं मनोरमम्
उद्यानवाप्यः सरितस्तटान्यपि
क्षोणी विचित्रा विभयाच यामिनी
चैत्रस्य रम्या शशिकौमुदीमती ।।१५।।

हंसध्वजे वर्हिकुशीलवस्तुते स्वच्छोदसम्भूतकुशेशयांचिते ।
मत्स्याभिरामे विहगैर्विभूषिते, हृद्ये तडागे जलजीवसेविते ।।१६।।

आरामरम्ये वसति चिरं प्रभुः
कृत्वा विदर्भाधिपतेः समं ततः
पुत्र्या पुरीं स्वा मगमत् प्रसन्नता

मारुह्य विन्दुश्च रथे सुखप्रदे ।।१७।।

आगम्य सख्युर्लभतेस्म दर्शनं
पुण्यं सुदाम्नो विदुषश्च तस्य सः
सार्धं हि विद्याः अपठद् गुरोः कुले
येन प्रभु र्ब्राह्मणकोविदानुगः ॥१८॥

जातं प्रसन्न भृशमेव मानसं
कृष्णस्य तं प्रेक्ष्य चकार सादरं
विद्वत्सुदाम्नः सुहृदो हृदार्चनं
सौम्यस्वभावस्य महीसुरस्य सः ॥१९॥

दृष्ट्वा सपर्यां विहितां गरीयसीं
स्नेहान्वितां तां प्रियभोजनादिना
कृष्णेन सर्वे भवनाधिवासिनो
राज्यश्च सर्वा बहुविस्मयं ययुः ॥२०॥

आगम्य दूरात् सुहृदा हरिर्व्यथाः, सोढाश्च कष्टानि बहूनि जीवने ।
दारिद्र्यहेतोः प्रददौ परं न तं,सोढानि तस्माद् वचसाभ्तधाच्छ्रियम् ॥२१

प्रीत्याग्रहीत् सः प्रसभं हि तण्डुलं
दत्तं तदर्थं प्रियमित्रकान्तया
चाश्नात् स तत् प्रेममयेन चेतसा
प्रास्थाप यद् तद्गमने कृताग्रहम् ॥२२॥

कृष्णः प्रतस्थे कति चिद् दिनानि च
पुर्यामुषित्वा महती मनीकिनी
मादाय लब्ध्वाथ शुभं निमन्त्रणं
युधिष्ठिरात् तस्य पुर क्रतौ प्रियम् ॥२३॥

भूमेः समस्तान् नृपतीन् पराजितान् ।
कृत्वा सुता पाण्डुनृपस्य विश्रुताः
एकातपत्रां प्रभुतां प्रतिष्ठितां
चक्रुश्च कीर्ति भुवि ते व्यतानिषुः ॥२४॥

कृष्णस्य लब्ध्वानुमतिं युधिष्ठिरः
स्वां राजसूयाख्य मखस्य योजनां
चक्रे सहर्षं महनीय वैभवां
प्रकृष्ट सम्पन्निधिभास्वरप्रभाम् ॥२५॥

भूपाः प्रदातुं बहुमूल्यसुन्दरा-
ण्युत्कृष्टवस्तूनि समागतास्तदा
राजेन्द्रवर्य्याय युधिष्ठिराय च
प्रीत्या भवन्तः प्रणता हि सादरम् ॥२६॥

कृष्णः स्वयं ब्राह्मणपादपङ्कज-
प्रक्षालनेऽभूद् यजनोत्सवे स्थितः
यस्तत्र नक्षत्रगणे यथा रवि
र्व्यद्योततालौकिकशौर्यसुन्दरः ॥२७॥

भीष्मस्य मत्या मत एव केशवः
पूजाग्र्ययोग्यः सति च स्थितेऽखिले
देवर्षितेजस्वि विपश्चितां गणे
तस्मात् सपर्यां प्रमुखा मविन्दत ॥२८॥

चैद्यो न सेहे प्रकृतौ मलीमसो
द्वेषादि दोषास्पददुष्टमानस
आद्यां सपर्यां विहितां परन्तु तां
कृष्णस्य संसारसतां प्रियस्य सः ॥२९॥

सम्पूजितं तं परिवीक्ष्य दुर्जन
श्चैद्यो भवन्तं वचनानि मन्युना
प्रायुङ्क्त निन्द्यन्यनृतानि तस्य च
ह्यागांसि नूनं शतशोऽभवंस्तदा ॥३०॥

'जातेषु चागः सु शताधिकेषु सः
व्यापादयत् तं' वचनं ददाविति
कृष्ण स्तदा तस्य वचः स्वमीरितं
संरक्ष्य चक्रेण शिरोऽच्छिनत् ततः ॥३१॥

यज्ञस्वरूपो भगवान् हरिर्मतः
आराध्यमान्यार्चनसक्तमानसो
ऽसौ रक्षको यज्ञविधानकर्मणां
धर्मं स पाति स्म हि चैद्यमारणे ॥३२॥

यज्ञे समाप्ते स्वभुवोऽनुकम्पया
लेभे प्रमोदं नृपति र्युधिष्ठिरः
कृष्णस्य पादाम्बुजयोश्चकार सः
भक्त्या स्वमौलिं प्रणतं सबान्धवः ॥३३॥

पाण्डोः सुतानामुदयञ्च सम्पदं
दृष्ट्वा प्रभुत्वं विभवं समुज्ज्वलं
दुर्योधनोऽदूयत मानसे भृशं
नाशाय तेषां स्वधियं न्ययूयुजत् ॥३४॥

श्रीद्वारकां स्वां नगरी मितः प्रभुः
क्षिप्रं ययौ धर्मपथस्य रक्षकः
पौराः समस्ता अभिनन्दनं व्यधुः
कृष्णस्य भक्त्या चरणौ ववन्दिरे ॥३५॥

आसन्निदाघस्य दिनानि यद्यपि
काले हि तस्मिन् जलधेः प्रभावभाङ्
नो स्पर्शनोऽद्भूयत नागरांस्तदा
श्रीद्वारकायां प्रभुकृष्णसेविनः ॥३६॥

पप्रच्छ कृष्णो निजपूज्यमग्रजं
नीलाम्बरं श्रीमथुरात आगतं
ग्रीष्मस्य वृत्तं नतमस्तको भवन्
आजानुबाहुं हतशत्रुमण्डलम् ॥३७॥

सूर्यस्य तापेन कठोरताजुषा
प्रालेयरूपा हरिणा महीभुजां
धारानिकायाञ्च्छरणं प्रताडिताः
धावन्ति वेगेन निषीदतो वृषे ॥३८॥

सह्यो न भानुः स्पृहणीय चन्द्रमाः
स्नानानि जातानि सरित्सरःस्वपि
वापीषु धारोद्गिरणे च साम्प्रतं
दिनान्तवेला हृदयप्रमोदिनी ॥३९॥

हेमन्तकाले नितरां प्रियोऽभवन्
नासह्यतां यः सविता गतो मधौ
जातः स एवातितरा मरुन्तुद
-श्चास्मिन् निदाघे परुषातपालयः ॥४०॥

उन्मीलयन् पाटलपुष्पवाटिकां
कुर्वन् द्विरेफांश्चपलाननारतं
चुम्बन् प्रसूनानि ससौरभाणि च
वाति प्रभाते पवनः सुखप्रदः ॥४१॥

ईर्ष्याग्निसन्तप्तमनो वसुन्धरा
ग्रीष्मेऽस्ति तप्तेव पदे पदेऽधुना
तोयाभिलाषो न कदापि शाम्यति
छायां विमोक्तुं न च कोऽपि काङ्क्षति ॥४२॥

उद्यानवीथ्यां सरितस्तटे जनाः
काङ्क्षन्ति सायं भ्रमितुञ्च कौमुदी-
शीतोज्ज्वलालोकसुशोभितस्थले
प्रातश्च मित्रैः सह साम्प्रतं शुचौ ॥४३॥

प्रीणन्ति पुष्पाणि च चन्दनं भृशं
पेयञ्च शीतं सरसं ससौरभं
सूक्ष्मं दुकूलं च सितं च निर्मलं
नीरं हिमाक्तं दधिदुग्धभोजनम् ॥४४॥

मध्याह्न कालस्तु नितान्तभीषणो
ग्रीष्मे स कालोऽसुभृतां पतत्रिणां
सम्पूर्णवृक्षादिलता मृगादिकाः
गच्छन्ति दुःखं कृशतां च शुष्कताम् ॥४५॥

दोषान् गुणांश्चापि निदाघवर्तिनः
उक्त्वा हि रामो विरराम भूयसो
जातां निदाघात् सकलां न्यधात् स्थितिं
सौख्यान्वितां दुःखमयीञ्च कोविदः ॥४६॥

कृष्णोऽथभूवर्तिषु चाततायिषु
भूपेषु चिक्षेप भवन् स्वचेतसि
चिन्तापरो दृष्टि मुदारभावनां
पुष्णन् हितार्थं जगतः प्रचक्रमे ॥४७॥

आसीन्महाँल्लोकभरोऽसुरोपमो
राजेन्द्रद्युम्नो विदितः कुवर्त्मगः
पृथ्वी नृशंसै रपि तस्य कर्मभिः
कष्टानि यान्ती नितरा मवेपत ॥४८॥

तस्माज्जगद्रक्षक आततायिनं
नातः परस्तात् सहते स्म तं नृपं
जन्ये महाघस्मरघोरनिष्ठुरे
कृष्णः स्वचक्रेण निनाय पञ्चताम् ॥४६॥

क्राथं मदोन्मत्तबलौघभीषणं
भूपं जघानाहुतिजारुथीपतिं
शैव्यञ्च सद्यः शतधन्वसंज्ञकं
कृष्णः परास्तं व्यधात् ततोऽधिपम् ॥५०॥

शृङ्गे महेन्द्रस्य निशाचराधमं
कृष्णो व्यधादाहत मेव गोपतिं
क्षिप्रं च हन्ति स्म ततो भयङ्करम्
अक्षप्रपातान्तिक नेमिहंसके ॥५१॥

भौमासुरस्तामस शक्तिदारुणः
आसीत् प्रगल्भो मदमत्तदुर्दमः
प्राग्ज्योतिषाधीश्वरमन्मथानुगः
प्रापीडयत् सोऽति ऋषींश्च सज्जनान् ॥५२॥

युद्धं महाविस्मयकारकं चिरं
तुल्यं न दृष्टं भुवि तेन भीषणं
हत्वासुरान् शौर्यवतः सहस्रशः
कृष्णोऽवधीत् तं नरकं रणाजिरे ॥५३॥

जह्ने स वाला: सुमुखी: सहस्रशो
ह्यन्तः पुरेऽसौ मणिपर्वते न्यधात्
दर्पोद्धतः सः स्वबलेन नैर्ऋतः
शूरानवामंस्त च भूरिशः क्षितौ ।।५४।।

मुक्ताश्च चक्रे स समस्तकन्यकाः
अन्तः पुरात् तस्य च वन्दिसद्मनः
प्रीत्या सहर्षं जगती जयस्वरं
चक्रेऽथ कृष्णस्य नभोविहारिणम् ।।५५।।

कशेरुमन्तं यवनं तमश्चरं
तं तालकेतुं च बभूव यो बली
लोकस्य विघ्नो रदवक्रराक्षसं
भोजञ्च कृष्णस्तरसा जिहिंस सः ।।५६।।

इत्थं प्रचण्डान् वहुसंख्यकान् नृपान्
लोकव्यथाकारिण आततायिनः
क्रूरांश्च दुष्टानसुरान् सहस्रशः
व्यापाद्य कृष्णः सुखिनीं भुवं व्यधात् ।।५७।।

अनिशं जगतीहितकारकं दुरितनाशकधर्मविधयकं
मधुरं शुभकर्ममनोरमं नयसमुज्ज्वलमंगलमेदुरं
जनतापविनाशनपण्डितं सकलदीनदरिद्रसुरक्षकं
शरणागतरक्षककेशवं नमति मे विनयेन मनः प्रियम् ।।५८।।

साहित्याचार्य-सांख्ययोगाचार्य डॉ० रमेशचन्द्रशुक्लकृत श्रीकृष्णचरित-
महाकाव्ये नरकासुराद्यनेककुटिलनृपवधो नाम अष्टमः सर्गः

# नवमः सर्गः

हर्तुं राज्यं पतितहृदयः पाण्डवानां छलेन
चक्रे बुद्धिं कपटमलिनां मन्ददुर्योधनोऽसौ
सान्निध्यात् सः कुटिलशकुने रन्वतिष्टत् कुचक्रं
द्यूतार्थं भूरमण मवदत् सादरं धर्मराजम् ॥१॥

नीतिं द्यूते द्रुपदतनयां बन्धुभीमादिकांश्च
संश्रित्य द्राक् कुमतिशकुने र्निन्द्यदुर्योधनोऽसौ
राज्यं सर्वं झटिति हृतवान् धर्मराजस्य पूर्णं
द्वेषेर्ष्यान्धो मलिनचरितः शक्रसम्पत्समृद्धम् ॥२॥

तस्यां स्थित्यां द्रुपदतनुजानीयत द्राक् सभायां
राज्यागाराद् धतमतिहृदा दुष्टदुर्योधनेन
सञ्जाताज्ञा विगतवसनां तां विधातुं बलेन
सन्नद्धोऽभूत् सपदि कुमति स्तत्र दुःशासनो हा ॥३॥

भीष्म द्रोणाद्यखिलगुरवो हन्त दुर्योधनस्य
भीत्या प्रोचुः किमपि न तदा मौन माश्रित्य तस्थुः
भूत्वानाथा द्रुपतदुहिता नैव साहाय्य माप्त्वा
कृष्णं सार्ता सदयशरणं ह्याह्वयद् दीनबन्धुम् ॥४॥

गोविन्द त्वं कुरुकुलजनै र्नीयमाना मवज्ञां
जानास्येतां मृदुलहृदयः किं न मां पाह्यनाथां
क्षिप्रं मा मुद्धर शुचिमते कौरवाम्भोधिघोरात्
दीनत्राता त्रिभुवनपते रक्षकः कष्टहर्ता ॥५॥

कृत्वा चेष्टा मपि गुरुतमां दुष्टदुश्शासनोऽसौ
कर्तुं नग्नां द्रुपदतनयां न क्षमोऽभूत् तदा तां
भूत्वा वासो विपुलविविधासीमदीर्घातिदीर्घं
कृष्णोऽयासीत् स हतधिषणोव्यर्थयत्नो बभूव ।।६।।

पाण्डोः पुत्रो विपुलविभवं सर्वराज्यं स्वकीयं
द्यूते नाशं शकुनिरचिते नीतवान् धर्मराजः
ईर्ष्या द्वेषादिकरतमनाः पाण्डवान् सद्य एव
वर्षाणिद्वादश हि विपिने चैकवर्षं निगूढं ।।७।।

कर्तुं वासं परमकुमतिः कल्मषासक्तचित्तो
भूत्वाऽन्यायी कुरुकुलवनोषर्वुधश्चादिदेश
सन्नद्धास्ते विपिनगमने द्रौपदी चापि सार्धं
सञ्जातास्तै विमलहृदया भूपदुर्योधनोऽतः ।।८।।

श्रुत्वेत्येतद् विपिनगमनं पाण्डवानां मुकुन्द
आपद्बन्धु द्रुपदतनयो याज्ञसेनिश्च शीघ्रं
यात्वारण्यं भृशममिलतां पाण्डवेषु प्रियेषु
निन्दन्तौ तौ कलुषितहृदः कर्णदुर्योधनादोन् ।।६।।

कृष्णोऽत्रादीदवनिरधुना शोणितं पास्यतीति
पापस्थस्याधमतममतेर्दुष्टदुर्योधनादेः
पार्थोऽनन्यस्त्वयिमयि चनो भेद आस्तेऽवगच्छ
संलप्स्यन्ते सपदि कुफलं नैजदुष्कर्मणां ते ।।१०।।

शंसन्तं तं द्रुपदतनयेदं भवन्ती विषण्णा
"राज्ञां मध्ये परिषदि हरेऽहं विकृष्टैकवस्त्रा
मां दृष्ट्वा ते दुरितपथगा धार्तराष्ट्रास्तदानीम् ।
ऐच्छन् पापाः सति गुरुगणे मां स्वदासीं विधातुम्।।११।

उक्त्वेत्येतत् प्रणतवदना दुःखचित्ता रुरोद
साहं ते त्वां सकलजगता मीश वच्मि स्वदुःखं
धृत्वा केशेष्वहमपि पुरः पाण्डवानां समेषाम्
आर्तंत्रातः प्रिय तव सखीन्यक्कृता हाक्रिये तैः ।।१२।।

अहत्वार्पु ये प्रकृतिकुटिला स्त्वय्यसत्कार्य मेतत्
तेषां नार्योऽर्जनशरचयैश्छिन्नशीर्षान् स्वभर्तॄन्
रोदिष्यन्ति क्षितिनिपतिता नाप्लुतान् शोणितेन
दृष्ट्वा क्षिप्रं, रुदिहि न, वचः सत्यमेतन्मदीयम् ।।१३।।

श्रुत्वा वाक्यं द्रुपदतनया शान्तचित्ता बभूव
कृष्णस्यैतद् भृशधृतिकरं दुःखिदुःखप्रहर्तुः
कृष्णः कार्यात् प्रचुरविविधात् क्षिप्र मेवानवद्यः
पश्यन् वर्षाश्रिय मभिनवां तां तदा भावयंश्च ।।१४।।

चेतोऽत्यन्तं मुदितचपलं प्राणिवर्गस्य लोके
कुर्वाणोऽयं दिशि दिशि नवं संसृजन् नव्यशोभां
वृक्षावल्यां विपिननिखिले वल्लरीष्वापगासु
ह्यायातोऽयं जलदसमयो जीवनाभां प्रयच्छन् ।।१५।।

अद्रावद्रौ हृदयसुखदा प्रेक्ष्यते जीवनश्रीः
जातं सर्वं सरसि च नदे तोय माश्लिष्टपङ्कं
नीपश्रेणी कुसुमसुरभिश्चित्त सौख्यप्रदेयं
शब्दं हृद्यं विदधति वने साम्प्रतं वर्हिणश्च ।।१६।।

सान्द्रै र्मेघैरसितसुषमावद्भि रेतद् दिवापि
गाढं श्यामं दिशि दिशि तम स्तायते सर्वतोऽलं
तस्माज्जातं दिनमपि निशा विद्युतो ज्योतिषा तु
मध्यालोको नयनपथगो जायतेऽवश्यमेव ।।१७।।

उड्डीयन्ते नयनसुखदाः पक्षिणोऽनेकवर्णाः
आकाशेऽस्मिन् जलदललिते पङ्क्तिबद्धा मनोज्ञाः
मेघा अद्भिश्चिर मुपनतां चातकानां प्रगाढां
दूरीकर्तुं तृषमतितरा मागताः प्रीतचित्ताः ॥१८॥

मन्ये त्रस्तं सहिमपवनाद् व्योम वर्षर्तुजातान्
मेघस्तोमं गुरुतरभरं रन्ध्रहीनं बिभर्ति
स्थूलं सान्द्रं मृदुल मृदुलं कम्वलं वारणाय
शैत्यस्यास्मिन् सुभगसमये सस्यसम्पत्प्रदे हि ॥१९॥

क्षोण्या मस्यां जलदसमये दृष्टिवर्त्माधिरूढाः
सञ्जायन्ते सुहृदि जगतोऽपीन्द्रगोपः अनेके
रक्ताभां ते वपुषि दधतः सञ्चरन्तः सुखेन
सम्प्रेक्ष्यैतान् मुदितमनसो बाल-वाला भवन्ति ॥२०॥

भात्याकाशं परमरुचिरं शक्रचापेन भूत्वा
सर्वेषां तद् हरति हृदयं सप्तवर्णं नितान्तं
हृद्यं सत् तन् नयनमधुरां दिव्यलक्ष्मीं दधानं
वीक्ष्य स्वान्तं चिरमपि न सम्प्राप्नुते तोषतृप्ती ॥२१॥

चेतोऽत्यन्तं हरति रुचिरा कामिनी कोकिलस्य
भुक्त्वा जम्बूफलपरिणतं साम्प्रतं सा तनोति
हृष्टा भूत्वा स्वनसुमधुरं योजयित्वा नवीनं
रागं कण्ठेऽप्यसति कुसुमोल्लासलास्ये वसन्ते ॥२२॥

एतेमेघा गगननृपते र्भूषणानीव भान्ति
हर्षो भूयान् विहरति परं प्रावृषेण्येऽत्र काले
गोपा गोप्यः कृषिषु कुशला मोदवन्तो भवन्तः
सञ्जायन्ते नयनपथगा नृत्यगानेषु मग्नाः ॥२३॥

मुक्ताचूर्णोपमरुचिजुषः शीकर श्रीसनाथाः
वृष्ट्यामस्यां कुटजकुसुमानां परागाः स्फुरन्ति
नव्यां रम्यां दधति च विभां निर्झरस्याच्छवर्णां
दध्नः साम्यं निदधति च ते कौटजागन्धवन्तः ॥ ४॥

शोभाम्राणां कुमुदसुमनः केतकी मारुतश्च
लोला दोलाः स्फुटितमृदुलाः पल्लवाः कन्दलानां
नूत्ना नीला पयसि सरसां दर्दुराणां च शब्दो
हृष्यन्तीयं ददति वसुधा प्राज्यहर्षं शिलीन्ध्रैः ॥२५॥

तस्यां वृष्ट्यां मुदितमनसा कृष्णचन्द्रः स्वकीयान्
इत्येतान् सः कमलनयनः सादरं भावभव्यान्
व्यक्तीकुर्वन् भवभयहरो योगिचेतोविहर्ता
दीनोद्धर्ताननजितविधु र्द्वारिका माजगाम ॥२६॥

द्यूते राज्यं शठशकुनिना योजिते नाशितं यत्
कृष्णोऽशोची दनुचिततया पाण्डवानां नितान्तं
लब्ध्वादेशं परमकुमतेः कूटदुर्योधनस्य
क्रूरान्याय्यं भृशमपि वने तन्निवासे च तस्मिन् ॥२७॥

चक्रे यत्नं वननिवसतो दुःखितांस्तान् विधातुं
काले काले बहुलविविधं नीचदुर्योधनोऽसौ
शिष्यै र्युक्तान् मुनिवर मथ प्राहिणोदेकदा तु
तांस्तत्कोपादवति च तदा सः स्म दुर्वाससं द्राक् ॥२८॥

तस्याः जाते विपिनवसतेः पाण्डवानां समाप्ते
घोरासह्ये बहुविध विपद्दुःखसन्तप्तकाले
तस्थुः सर्वे द्रुपदनृपतिः, सात्यकिः पाण्डवाश्च
रामः कृष्णः सदसि च धराभृद्विराटस्य शीघ्रम् ॥२६॥

विन्देयुः स्वं कथमपि सुताः पाण्डुभूपस्य राज्यम्
आसीत् तस्यां नृपमतिमता प्रश्न एषस्सभायां
तत्कर्त्तव्यं भवतु विधिना येन भद्रं कुरुणां
पाण्डोः पुत्राः प्रियमपि शिवं चाप्नुयुर्नैजमिष्टम् ।।३०।।

ऊचे कृष्णः कुरुकुलहिते स्वं भवन्तो विचारं
धर्म्यं न्याय्यं विदधतु शुभं कीर्तिमद् युक्तरम्यं
यन्नो धर्माद्‍दन समुचितं धर्मराजो न काङ्क्षेत्
तत् स्याद् राज्य हृयपि सुरपते रेतदेवास्ति सत्यम् ।।३१।।

गत्वाऽन्यायं कलुषरुचयो धार्तराष्ट्रा अहार्षु
स्तेषां राज्यं न च निजबलेनैव धर्माहृतेन
सत्ये पाण्डुक्षितिपतनयांस्ते विजित्याधिजग्मुः
सत्येतस्मिन्नपि हितमना धर्मराजोऽस्ति तेषु ।।३२।।

आस्ते तेषा मियमतिशया त्वेकतः स्तुत्यचेष्टा
दृष्ट्यध्वानं व्रजति मलिनं चैकतः कर्मनिन्द्यं
तांस्ते पाण्डुक्षितिपतनयांस्ते विजित्याधिजग्मुः
कर्तुं नित्यं कुरुकुलसुताः कामयन्ते नृशंसाः ।।३३।।

योद्धुं चेत् ते कलिलहृदयाः कौरवास्तान् व्यधास्यन्
दुःखग्रस्तान् विमलमनसो बाधिता स्तेऽपि भूत्वा
युद्ध्वा युद्धेऽपकृतिनिरतान्ताननेष्यंश्च नाकं
नो ज्ञेयास्ते मितबलजुषः पाण्डवाः सन्त्यजेयाः ।।३४।।

जन्ये तेषा मुपकृतिपरो मित्रवर्गो ह्यवश्यं
साहाय्यार्थं शुभमतिमता मुद्यतः स्याद् विधाय
शक्त्या सार्धं प्रबलगुणया संशयो नात्र कार्यः
केच्छा शत्रो रिति च विदितं निर्णयः कार्य एव ।।३५।।

कश्चिद् दूतो विमलहृदयो धर्मशीलः कुलीनो
धीरो येन प्रथितधिषणः प्रेषणीयोऽत्र कार्ये
तानाश्वास्य स्वशुभमतितः शान्तचित्तांश्च कृत्वा
राज्यं चार्धं निहितमतयस्ते भवेयुः प्रदातुम् ॥३६॥

दीप्येच्छान्तिः कुरुषु सततं पाण्डुपुत्रेषु चापि
धर्मो लोके जयतु भगवान् कृष्ण ऐच्छत् सदैव
हेतो रस्माज्जगति जनतां धर्ममान्यां सुनीतिं
नेतुं प्रीत्यायतत मनसा लोक कल्याणनिष्ठः ॥३७॥

काले युक्ते झटिति गतवान् द्वारकां वासुदेवात्
प्राप्तुं योगं युधि स कुटिलो मन्ददुर्योधनोऽथ
पार्थोऽप्यासीद् विनय विनतः कृष्णपार्श्वे तदर्थं
श्रुत्वा सर्वं स तद भिहितं मान्यतां स्वां न्यधत्त ॥३८॥

तस्माच्छ्रुत्वा तदभिलषितं शस्त्रिसैन्यं विशालम्
अङ्गीकर्तुं कुरुकुलसुतो दत्तवान् स्वं विचारं
कुन्तीपुत्रोऽर्जन शुभमतिः कृष्ण मेवास्त्रहीनं
युद्धे यो नो मुदितमनसा योत्स्यते तं ववार ॥३९॥

युद्धारम्भादमितमहिमः केशवः प्रेषणार्थं
दूतत्वेनाखिलभवपतिः प्राक् च निर्धारितोऽभूत्
पुत्रैः पाण्डो रवनिपतिभिः कृष्णवैशिष्ट्यविद्भिः
पूज्यः क्षिप्रं कुरुकुलसदः सन्निधानेऽप्रमेयः ॥४०॥

दूतो भूत्वा झटिति भगवान् केशवः सम्प्रतस्थे
प्रत्युद्गन्तुं विविधविधिभिः कौरवाणां पुरी सा
जाता कृष्णं परमललितातिथ्य मङ्गीचकार
नो राज्ञोऽसौ विदुरसुजनस्यादरं स्वीचकार ॥४१॥

नो स्याद् युद्धं कुरुकुलमियादुन्नतिं मङ्गलञ्च
पाण्डोः पुत्रा मुदितहृदयाः कौरवाश्चापि सर्वे
प्रेमप्रीतिव्यवहृतिमयाः सन्तु कृष्णस्तदानीं
जन्ये नाशो भवति बलवानित्यवोचत् सभायाम् ।।४२।।

लोभासक्तान् नृप निजसुतान् शाधि पाण्डोः सुतेषु
सद्बन्धुत्वं भवतु च यथा भूप तेषां महत्व
कर्तुं सेवां तव च सकलाः सन्ति युद्धोद्यताश्च
सम्भाष्येदं हितकरवचस्तत्र कृष्णो व्यरंसीत् ।।४३।।

मेने तन्नो किमपि कथनं मन्ददुर्योधनोऽसौ
निर्बन्धे सः प्रबलदृढता मग्रहीच्चावमेने
कृष्णोक्तं तत् परमकुमति र्देशनाशाभिलाषी
सम्प्रेक्ष्यैतन्निखिलपरिषद् दुःख मार्च्छन्नितान्तम् ।।४४।।

सद्बन्धुः पुंसां हितकृत् सज्जन-मित्रं
दाता सद्बुद्धे र्वसुधारक्षणलग्नः
इष्टं सर्वेषाञ्च शुभं तस्य पितु र्मे
कुर्याद् दीनेऽस्मिन् विमतौ स्वां करुणां सः ।।४५।।

साहित्याचार्य-सांख्ययोगाचार्य डॉ० रमेशचन्द्रशुक्लकृतश्रीकृष्णचरित-
महाकाव्ये कृष्णदूतत्वं नाम नवमः सर्गः

## दशमः सर्गः

जन्यसूचक इतः कुरुपक्षे
शंखशब्द उदियाय विशाले
पाण्डवाश्च रणघोषकशंख
शत्रुकम्पनपटुं युधि दध्मुः ॥१॥

सम्पराय-पृथिवीं व्रजति स्म
पार्थभूषितरथः प्रभुकृष्णः
सारथी भवसुविस्तृततेजाः
यस्य चालनकृते स्थित आसीत् ॥२॥

सांयुगीनवरविश्वभटाग्र्यः
कृष्णसारथिरथस्थितपार्थ
आगतो रणधरां हि यदैव
सैनिका जय जयेति शशंसुः ॥३॥

धर्मरक्षकनयस्थितकृष्णं
प्रेक्ष्य पाण्डवचमू भृशमोदं
विन्दतः स्म च तदा कुरुसेना
द्वेऽपि कृष्ण वदतः स्म जयेति ॥४॥

पक्षयो र्हि कुरुपाण्डवनाम्नो
श्चोभयोरजनि हर्षंबलीयान्
सैनिकाः प्रबलसाहसवन्तः
शौर्यशक्तिविभयाति समिद्धाः ॥५॥

अर्जुनः सविनयं प्रभुकृष्णं
कैः सहात्र युधि विश्रुतशौर्य्यैः
वीरपुङ्गवजनैः करणीयं
युद्धमीड्य इति सादर मूचे ॥६॥

कृष्णदर्शितभटान् परिवीक्ष्य
पार्थचित्त मतिकष्टमियाय
सन्ति बन्धुगुरवः स्वजनाश्च
नैषु माधव कदापि हि योत्स्ये ॥७॥

ज्ञातिमान्यगुरुवंशजबन्धून्
नात्र कृष्ण समरे विनिहत्य
शक्रराज्य मपि सर्वसमृद्धं
कामयेऽह मिति सत्य मवेहि ॥८॥

व्याहरन्निति स दुःखमसीमं
प्राप्नुवन् निजधनु र्व्यदधाच्च
स्यन्दनेऽति निदधद् गुरु चिन्ता
मर्जुनोद्भटभटो निषसाद ॥९॥

वीक्ष्य कापुरुषता मतिशोच्याम्
अर्जुनं निगदति स्म मुकुन्दः
शोच्य मस्ति न पृथासुत यद् यत्
तत्र तत्र हृदयं तव खिन्नम् ॥१०॥

भाषसे त्वमिव पार्थ विपश्चित्
नो गते बुधजना अगते वा
नो हते ह्यहते न कदापि
मानसे निदधतेऽर्जुन शोकम् ॥११॥

आत्मतत्व ममरं त्व मवेहि
नाशमेति न कदाप्यवयाहि
नश्वरं वपु रिदं प्रियपार्थ
प्राणिना मिति न विस्मर धीर ॥१२॥

प्राणिनो वपुषि बाल्य मुपैति
यौवनं वसति तत्र ततश्च
वृद्धतोद्भवति तत्र यथा च
देह मन्य मपि याति तथा सः ॥१३॥

छेद्यतां व्रजति नैव च शोषं
दग्धतां श्रयति जातु न नित्यः
क्लेद्यतां भजति नो स कदापि
वस्तुतोऽस्ति स सनातन आत्मा ॥१४॥

व्याप्त मस्ति तदिदं प्रिय पार्थ
कुत्र नेति परिभावय नित्यं
गीयते तदिह शास्त्रपुराणैः
ब्रह्म सर्वभुवनेष्विति भाति ॥१५॥

देहिनो हि वसते नववासः
जीर्णवस्त्र मिव देहपुराणं
वीरपार्थ दधते परिमुच्य
भक्तभूषण नवीनशरीरम् ॥१६॥

लभ्यते ह्यसुमता भुवि येन
जन्मतस्य निधनं ध्रुवमेव
वेदना मपरिहार्यपदार्थे
याहि नो प्रियधनञ्जय तस्मात् ॥१७॥

भेद एव न जयाजययोश्च
भिन्नताविरहिते सुखदुःखे
पार्थ लाभ इव हानि रितित्वं
युद्धकार्यनिरतो भव मत्वा ॥१८॥

मानसे तव निधेहि समत्वं
पार्थ योग इति तन्मतिमन्तो
व्याहरन्ति परिहाय च सङ्गम्
ऐक्यगा मपि च सिद्धि मसिद्धिम् ॥१९॥

नानुतिष्ठ फलवासनया त्वं
कर्म कामपतितं मनुजं सा
दीनतां नयति पात मनन्तं
साम्यधीः भवति बन्धनवान्न ॥२०॥

त्यक्तकामपुरुषः शम मेति
निःस्पृहो भवति नाप्यभिमानी
योगनिष्ठ समताश्रितचित्तं
नष्टमोह मनुयाति न शोकः ॥२१॥

अन्तरेण पुरुषो न हि कर्म
स्थातु मर्हति कदापि जगत्यां
श्रेयसे सतत मेव स कुर्यात्
काममोहरहितो मुदितः सन् ॥२२॥

कौशले स्वहृदयं हि निधाय
सर्वदा भवपतौ निजकर्मा-
ण्यर्पयन् प्रियधनञ्जय युद्धं
निर्ममः कुरु सुखेन मनस्विन् ॥२३॥

कार्यं कर्म कुरुते मनुजो य
स्तत्फले न हृदयं निदधाति
ज्ञानवानपि च सोऽस्ति हि योगी
तं जनं नमति भद्रमहीयः ॥२४॥

क्षात्रधर्म मव युद्धधरित्र्याम्
अन्यथात्र भुवि यास्यसि हासं
शोभते त्वयि न कापुरुषत्वं
क्षुद्रदुर्बल मनो जहि शीघ्रम् ॥२५॥

अर्जनं बहुविधानि वचांसि
शुभ्रधर्म शुभनीतिपराणि
व्याहरन् हितमये प्रभुकृष्णः
कार्यकर्मणि चकार निलीनम् ॥२६॥

प्रेरितो भगवतार्जुनवीरः
संयुगे परमभीषण वाणै
वैंरिवर्गहननाय ततश्च
चक्रमे भुवनशूरवरेण्यः ॥२७॥

शस्त्रकौशलधरा बलभीमाः
शत्रुपक्षदलन क्षमवीराः
क्रूरकौशलजुषो मदमत्ताः
ध्वंसने युधि रता अथ जाताः ॥२८॥

सैन्यनायकभटाः स्वविपक्ष-
ध्वंसनाय निशितान् धनुषि स्वान्
सन्निधाय तरसा शरसंघान्
चिक्षिपुः क्षितिरभूद् रुधिराद्रा ॥२९॥

क्षिप्रमेव समरस्य धराभूद्
रुण्डमुण्डतति वेष्टनभीमा
चास्त्रशस्त्रचपला रणभूम्यां
दिद्युते सुभटगर्जनविद्धा ॥३०॥

कृष्णनीति मवलम्ब्य हि पार्थो
धर्मराजनकुलौ सहदेवो
भीमशत्रु हृदयव्यथनार्हो
वैरि-नायकगणं च निजघ्नुः ॥३१॥

केशवः प्रियशुभं जयमार्गं
दर्शयन् नयजुषं शुचिधर्मं
पाण्डवान् प्रति च शत्रुजनस्य
नायकान् सपदि घातयति स्म ॥३२॥

विश्वविश्रुत महारथिभीष्मं
द्रोणशस्त्रगुरुकीर्तिमनोज्ञं
शूर मौलिमणिकर्णभटेन्द्रम्
उद्भटोद्धतजयद्रथवीरम् ॥३३॥

धार्तराष्ट्ररणकारणभूतम्
ख्यातवीरवहुलान् युधिदक्षान्
चापकोविदजगद्गणनीयान्
लक्षशो भटवरान् रणभूम्यां ॥३४॥

सैनिकांश्च कुशलान् अतिदीप्तान्
लोकविश्रुतबलां रणसेनां
पार्थभीमनकुलाः सहदेवो
नाकलोक मनयन्नथ धर्मः ॥३५॥

भूमिभारहरणाय हि पाप—
ध्वंसनाय सुकृतानि च पातुं
कृष्ण ईश इह जन्म धरित्र्यां
स्वेच्छयाधित जगद्धितकर्ता ॥३६॥

पाण्डवाः भगवतः कृपयैव
संयुगे परमदुर्गमभीमे
लेभिरे स्वविजयं नतशीर्षाः
प्राणमन् सविनयं प्रभु कृष्णम् ॥३७॥

भक्तानां हृदि सततं हितं निधाय
कृष्णो यो जगति जनुर्मुदा दधाति
पापान् हन्त्यवति सतश्च धर्मलग्नान्
तं वन्दे त्रिभुवननायकं महान्तम् ॥३८॥

साहित्याचार्य-सांख्ययोगाचार्य डॉ० रमेशचन्द्रशुक्लकृत श्रीकृष्णचरित-
महाकाव्ये महाभारत युद्धं नाम दशमः सर्गः

## एकादशः सर्गः

कृष्णं वन्दे त्रिलोकीशरणमहमजं दीनबन्धुं प्रभुं तं
रूपं वेत्तुं क्षमो नो जगदखिलपते देहिनो यस्य जीवः
वस्त्वन्यन्नोऽस्ति सत्यं क्वचिदपि भगवन् वस्तुतस्त्वां विहाय
मायाहेतोरसत्यं यदपि भवति तत् सत्यतुल्यं विभाति ।।१।।

चिच्छक्तेस्तेऽतिदूरे निवसति तिमिरं त्वत्प्रकाशप्रकर्षात्
आस्तेरूपं त्वदीयं विविधबहुजनुः कारणं शाश्वतञ्च
एतच्छ्रेयस्करं त्वं समुचित समये सन्निधत्से कृपालो
भिन्नो नानन्दमात्रात् सुजनहितपटो कृष्ण सच्चित्स्वरूपात् ।।२।।

नाथत्वत्पादसक्ता मनसि हि सततं ये भृशं चिन्तयन्ति
त्वामानन्द निलीनाश्चरण जलजयो र्जीवनं स्वं नयन्ति
वेदादालोकमाप्त्वा शुभशुचिसुखदं देव कल्याणकारिण्
त्वद्भक्तास्ते महान्तः क्लमदनुजरिपो यान्ति शान्तिं नितांतम्।।३।।

मायाशक्तिप्रभावाद् विषयबहुविधात् सज्जनोमन्यते त्वद्–
भिन्नं तन् नो विमुक्तो भवति हि तमसो घोरदुःखप्रदातुः
एतत् सत्यं जगन्नो सुमतिसुविदितं तस्य मोहार्णवत्वं
भोगक्षेत्रे स जीवोनियतितति फलं भोक्तु मत्रैव वद्धः ।।४।।

ध्यानं येषां कथायां दुरितरिपुदलन प्रौढशक्त्यां मुरारेः
नो ते लग्नं भवन्तो बुधमुनि ऋषयोऽपि प्रयन्ति प्रकाशं
शास्त्रज्ञानं प्रकृष्टं भवति च विफलं पण्डितानां समस्तं
तेषां नूनं जगत्यां हरिपदविरतिर्येषु सापेक्षतेऽत्र ।।५।।

अध्यस्तं तत्र कृष्णे जगदिदमखिलं मायया तस्य भाति
वाधाबोधप्रतीतिः क्वचिदपि भवति क्वापि नो जायते च
साक्षीं सन् वीक्षतेऽसावुभयमपि परं तत्र दृष्टिः समैव
नो हेतु स्तस्य कश्चित् स्वयमपि स हरिः सर्वहेतुर्हिबोध्यः ॥६॥

संज्ञां रूपं विभर्ति स्वजनन मपि सः कर्म नैवापि धत्ते
सत्यप्येवं न कश्चिन् मतिनिपुणबुधः कल्पनां तस्य कर्तुं
दोषेऽदोषे समर्थो न विभुभगवतः सः परं सृष्टिकार्यें,
नाशे स्थित्याञ्च दृष्टः समुचितसमये मायया तानि गृह्णन् ॥७॥

लक्ष्मीं लब्ध्वा प्रधी यामपि भवति पितः शास्त्रवेत्ता श्रुतिज्ञः
मोहग्रस्तोऽभिमानी गतकपटजनस्नेहकारिण् प्रभो मे
त. हत्वा नाथ जाता मयि भृशकरुणानुग्रहश्चापि जातो
दारिद्र्ये त्वां स्मरामि प्रतिदिवस महो सुन्दरं किन्न तेऽस्ति ॥८॥

भूत्वा सत्याश्रितो यः सरलहृदयवान् कृष्ण तुभ्यं ददाति
पत्रं पुष्पं फलं वातिशयनतशिराः सादरं तोयमेव
श्रेष्ठां सोऽपि प्रकृष्टां परमशुभगतिं प्राप्नुते सोऽपि मुक्तिं
वन्देऽहं त्वा मुदारं सहृदयमृदुलं धर्मराजोऽनुग.ते ॥९॥

मेघश्यामं तडिद्वल्ललितपटधरं चक्रपाणिं नमामि
स्वेच्छोपात्तं शरीरं तव वितरति शं भक्तवृन्दाय चैतत्
तांस्तत् पूर्णाभिलाषान् सपदि हि कुरुते चिन्मयेच्छास्वरूप
प्रेक्षेऽहं यद् दयालोऽत्यनुपम सगुणं ते कृपा मेव मन्ये ॥१०॥

कर्तुं भृत्ये कृपां त्वं मयि च तव वपुर्व्यक्तता मेतदीश
लोकस्वामिन्ननैषी भंवति न रचना पञ्चभूतप्रसूता
शुद्धा सत्वप्रसन्ना हृदयमतिपरा द्योततेऽलौकिकीयं
भूत्वाऽऽसीना [illegible] नेत्रु मर्हन्ति मेनाम् ॥११॥

ज्ञानागम्यः प्रभो त्वं तवपदनिरताः सन्ति ये भक्तिमन्तस्
तेभ्यः श्रुत्वा त्वदीया मघहरणकथां चेतसा नम्रसौम्याः
मन्यन्ते जन्म धन्यं भुवि परमहितां निघ्नतां यासि तेषां
नो जय्यस्त्वं त्रिलोक्या मपि भवसि परं तज्जितः पूज्य कृष्ण ।।१२।।

हित्वा भक्तिं त्वदीयामिह जगति जनाः शास्त्रशक्तिं हि लब्धुं
चेष्टन्ते ये नितान्तं दधति न सुमतिं ते न बुद्धिप्रकृष्टाः
क्लेशं गाढं कठोरं श्रममपि नितरा माप्नुवन्तीव चैव
नान्यत् तत्वं लभन्ते तुषगतकठिनभ्रान्तिमन्तो मनुष्याः ।।१३।।

आत्मत्वात् प्राणिना मागमवुधनिकरोऽवेति नारायणं त्वां
गीतो लोक प्रभुत्वादपि जगदखिलश्रेष्ठ नारायणस्त्वं
सर्वेषां त्वञ्च साक्षो कमलनयन मतः कृष्ण नारायण स्त्वं
नाराणां चायनानां भवसि च भगवन्नंश इत्यत्र हेतुः ।।१४।।

यावन्तः सन्त्यभीष्टा जगति वहुविधाः प्राणिना मर्थजातास्
तेषां रूपं दधानो विलससि रुचिरं सर्वदा त्वञ्च कृष्ण
वृत्तीनाञ्चापि नाथ स्फुरित फल मपि भ्राजसे देव शश्वत्
धीमन्तस्त्वां ग्रहीतुं सकल मपि सुखं हर्षभाज स्त्यजन्ति ।।१५।।

इत्थं चक्रेऽपि भीमः स्तुतिमतिविनतः कृष्णपूज्यस्य भक्त्या
पार्थो भूत्वा विनम्रः कृतनतनिटिलः साञ्जलिः केशवस्य
श्रीपादाम्भोजयुग्मे हृदि वहु निदधन्मञ्जुलं भाववृन्दं
सान्द्रप्रेम्णार्पयन् स्वं नृसुकृति सुहृदं तुष्टुवे वासुदेवम् ।।१६।।

आद्यं हेतुं समेषां प्रभुवरवरदं चेतना चेतनानां
तं वन्दे यस्यं नाभे रज उदभवदसौ सर्वसृष्टिं व्यधाद्यः
शम्भुः शक्रोऽमरा स्त्वां निखिलवुधवरा यक्षगन्धर्वसिद्धाः
योगज्ञा वेदविज्ञा अनिश मपि हरे पूजयन्ति प्रकामम् ।।१७।।

पृथ्वी नीरञ्च वह्नि र्वियदथ च पवनो मानसं चेन्द्रियाणि
चाहङ्कारः प्रधानं पुरुष इति महत्तत्व मर्थाः समग्राः
देवास्तेषाञ्च सर्वेऽपि निखिलजगतः कारणत्वेन सन्ति
तेषामङ्गी प्रभो त्वं पतिरसि च परं तेङ्गभूताः समस्ताः ॥१८॥

अर्थाः सर्वेऽपि जाताः प्रकृतित इति ते ह्यङ्गभूताः समस्ताः
गृह्यन्ते ये च पूर्णा विदित मिह सतां यान्ति नात्मत्वमेते
ते सर्वेऽतो नितान्तं कथमपि भगवन् वेत्तु मर्हन्ति च त्वाम्
त्वद्रूपं चाप्यसीमं स्वयमपि भवसि त्वं विधातु र्विधाता ॥१९॥

ईक्षन्ते त्वां निजान्तः करणसदनगं सर्वभूत स्थितञ्च
व्याप्तं द्रव्येषु चार्थेष्वपि जगदखिलेश त्रिलोक्येकवन्द्य
मार्तण्डे चौषधीशे विधिकृतविविधे वस्तुनि श्रीनिवास
वासं कुर्वाण मीड्यं सकलमुनिजना योगिनः साधवश्च ॥२०॥

विद्वांसः कर्मकाण्डप्रथित वुधजनाः कर्ममार्गोपदेष्ट्र्या
त्रय्या ये माधवं त्वा मनिशमनुदिनं पूजयन्तो वदन्ति
शक्रस्त्वंचानलस्त्वं बहुलविविधतास्थं च रूपं बिभर्षि
नानायज्ञैश्च ते त्वा मिति भव विततं चेतसोपासतेऽलम् ॥२१॥

ज्ञाने कर्माणि सक्ता बुधवरनिखिला वन्दनीया नितान्तं
संन्यस्य स्वानि शान्ताः शुचितरमनसो मोहरागादिशून्याः
शश्वत् त्वां ज्ञानयज्ञस्थित मतिसुजनास्ते प्रभोऽर्चन्ति मत्वा
त्वं ज्ञानं तेऽस्ति रूपं तदपि भगवतो विश्वसन्तीति तत्र ॥२ ॥

मौलिं नत्वा स्वकीयं मुररिपुचरणाम्भोजयो रादरेण
भक्त्या प्रीत्या महत्या भृशमधुरगुणान् गातु मित्थं प्रवृत्तो
माद्रीसूनुः स नम्रो नकुल इति शुभं नामधेयं न्यधाद् यः
कृष्णस्य श्यामहृद्यप्रियजलधिसुतास्वामिनः सुन्दरस्य ॥२३॥

कल्याणानां निधानं तवचरणकृपा वर्ततेऽस्मासु नाथ
यद्धेतो र्घोरमेतं समरसलिलधिं शत्रुनक्रातिभीमं
सञ्जाताः संतरीतुं भटमकरमयं वैरिजन्तुप्रपूर्णम्
अत्यन्तक्रूरशूरोद्भटजलचरबद्दुर्गमं शक्तिमन्तः ॥२४॥

सञ्जाता धार्तराष्ट्रा अघनिहितधियोऽस्मासु पुत्रेषु पाण्डोः
बद्धक्रूरातिवैरा विषसमविषमाः कर्मनिन्द्यातिशोच्याः
नष्टान् कर्तुं समूलं सततकृतधियः सर्वदाऽस्मानभूवन्
आर्तानां रक्षकस्त्वं प्रियसुपथपितस्ते स्वयं ध्वंस मीयुः ॥२५॥

आचार्यद्रोण आसीद् गुरुरिह विदितः शस्त्रविद्याप्रदाता
श्रेष्ठो भीष्मः क्व वीरोऽखिलजगति बभौ शूरधानुष्कपूज्यः
सञ्जातः कर्णवीरो निखिलभटभवे शौर्य्यसौन्दर्यगेयः
सर्वेभ्यो जीवनं नः शरणगतजनान् नाथ तेभ्यो ह्यगौप्सीः ॥

नानोपायैः कठोरै रसुहरगरलेनापि लाक्षागृहेण
नीरेऽगाधे निपात्यच्छलकपटमयद्यूतकार्येण राज्यं
हृत्वा निर्वासनेन प्रतिविजनवनं पीडयामास चास्मान्
बाल्यादेच्छन्निहन्तुं विगतदयरिपुः पाण्डवान् धार्तराष्ट्रः ॥

तस्यास्तस्या विपत्तेः प्रभुवर सततं नो व्यधाद् रक्षणं त्वम्
आपत्सु त्वं सुबन्धुः शरणगतजनोद्धारकर्तोपकर्ता
नौति त्वां कृष्ण एषोऽनघ तव नकुलः सादरं भक्तिलीनः
संसारेशं कृपालुं प्रियभरणपटुं वन्दनीयं समेषाम् ॥२८॥

वासं कृत्वा व्रजे त्वं व्रजनृहितकरस्तुत्यकार्याण्यजस्रं
कृत्वा सर्वांश्च गोपान् सुमृदुलमनसातूतुषो गोपसुभ्रूः
त्वं तत्रत्यानगौप्सी र्विविधबहुविपद्भ्यो नतान् गोकुलस्थान्
धेनूस्त्वञ्चारयश्च प्रियहित मनिशं तास्वकार्षीः कृपालो ॥२९

ये ये दैत्याश्च दुष्टा व्रजगतजनता पीडनार्थं ह्युपेतास्
त्वां वा हन्तुं नितान्ताधमहतमतिमत्कंससम्प्रेषिताश्च
तान् सर्वांस्त्वं मदान्धान् जघनिथ मलिनान् क्षिप्रमेव प्रगल्भान्
वत्सं दैत्यं प्रलम्बं वकमसुरमपि त्वं बहूंश्चान्यनीचान् ॥३०॥

रोषादिन्द्रस्य चापि व्रजजनसकलानीश गोवर्धनेन
पासिस्म त्वं च कंसं झटिति निहतवान् मेदिनीभारभूतम्
अन्यान् भूपानघस्थान् शुभशुचिपथगान् सत्वरं कुर्वतैव
श्रेयोहेतो स्त्वयेयं जलधिजलगता द्वारका स्थापिता च ॥३१॥

म[illegible]दानां कौरवाणां भवतु हितमतः प्राय तिष्ठाः इति त्वं
नाश्रौषुस्ते हितोक्तिं हितकरसुहृदो मङ्गलानां विधातुः
एषस्ते पूज्यनाथ. प्रणमति सहदेवानुगः सर्वदर्शिन्
निष्णातं स्तुत्यनीत्यां समरकुशलिनं देव योगेश्वरं त्वाम्॥३२

[illegible]ती माताब्रवीत् तं त्वमसि महसां तेजसाञ्चैकसिन्धुः
[illegible]तै. प्राप्ता मदीयै प्रभुवर तनयै र्युद्धभूम्यां जयश्रीः
स हाय्यं ते कृपाद्रं प्रबल मतिशयं प्राप्य चामोघदीप्तं
सार्धं पुत्रैः स्वकीयै र्नमति नमति च त्वां जगत्पालकस्त्वम्।३३

[illegible]ामि त्वां कृपालुं द्रुपदनृपतनयाभाषत प्रीतचित्ता
[illegible]षां नास्यां जगत्या मशरणशरण त्वं सुहृन् नाथ तेषां
प्रेम्णा युक्तो मनुष्यो विपदि सहचरं यो हृदा ध्यायति त्वां
साहाय्यं तस्य कर्तुं द्रवसि गुणनिधे द्रौपदी नौति भक्त्या । ३४

कृष्णं नत्वा विधाय स्तुति मतिललितां तस्य भक्त्या महत्या
तस्मिन् काले नितान्तप्रियनिजसुहृदं प्राप्नुवन्तोऽति पीडां
सर्वे ते पाण्डुपुत्राः द्रुपदनृपसुता मातृकुन्ती तथान्ये
प्राहिण्वन् स्वं प्रियेष्टं ससलिलनयनाः द्वारकां प्रेममग्नाः ॥३५

दरिद्राणां बन्धुं हतमतिजनानाञ्च सुहृदम्
अनन्तानुक्रोशप्रथित यशसं संसृतिपतिं
सदार्ति चार्तानां हरति सपदि प्रेम्णि रमते
हरि र्यस्तं वन्दे मृदुलमनसं कृष्णपितरम् ॥३६॥

साहित्याचार्य-सांख्ययोगाचार्य डॉ० रमेशचन्द्रशुक्लकृतश्रीकृष्णचरित-
महाकाव्ये कृष्णस्तवनं नाम एकादशः सर्गः



श्रीः

# श्रीकृष्णचरितम्

## (शुद्धिपत्रम्)

| पृ० | श्लो० | पं० | शुद्धम् | पृ० | श्लो० | पं० | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ४ | ३ | १ | रमेश | ४९ | ३० | ३ | दुःख |
| ५ | १ | २ | लीनानि | ,, | ३२ | ३ | स्वकीयान् |
| ,, | ५ | ४ | क्षितौ | ५० | अन्तिमपङ्क्त्यां | | पञ्चमः |
| ७ | १४ | ४ | कृष्णस्य | ५२ | १० | ४ | सहस्रशश्च |
| ९ | २५ | १ | अवाचयत् | ५३ | १६ | २ | चल |
| १० | ३१ | ४ | मित्थ | ५४, | १९ | १ | सर्वथा |
| ११ | ३७ | ४ | नॄन् | ,, | ,, | २ | सलिले,स्नानं |
| १२ | ४५ | १ | उत्थाप्य | ,, | २२ | १ | संसेधते |
| १९ | ४ | ३ | रत्न | ५४ | २२ | ४ | ऽस्तं |
| २० | ८ | ३ | धन | ५४ | २३ | ३ | पितॄन् |
| २३ | २८ | १ | चन्द्रमुख्यो | ५६ | ३२ | ३ | भटं |
| २३ | २९ | ३ | हृदयेक्षणे | ५९ | १३ | ४ | नो |
| २४ | ३१ | १ | अभूत् | ६० | २२ | ३ | मधूलका |
| २९ | ६४ | १ | प्रोचुः | ,, | ,, | ४ | शैल |
| ३० | ६८ | २ | धतं | ६३ | ३७ | १ | दूतं |
| ,, | ६९ | ,, | त्वरया | ६६ | ६ | ४ | सरःसु |
| ३१ | ७४ | २ | पित्रोः | ६७ | १३ | ३ | मधौ |
| ३१ | कंसवधो (अन्तिमपङ्क्त्याम् | | | ६७ | १७ | ४ | विन्दंश्चा |
| ४१ | ५६ | ४ | वशंगताः | ६८ | १९ | १ | प्रसन्नं |
| ४३ | ७१ | २ | चोद्धवं | ६८ | २३ | १ | कृष्णः |
| ,, | ,, | ३ | तत्त्वं | ७० | ३० | ३ | निन्द्या |
| ,, | अन्तिमपङ्क्त्याम् | | उद्धवस्य व्रज | ७२ | ४२ | ४ | काङ्क्षति |
| ४६ | १५ | ४ | मिदं | ७३ | ५० | ४ | व्यदधात् |
| ,, | १७ | ,, | सुतं | ७४ | ५६ | १ | कशेरुमन्तं |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ,, | ,, | ३ | लोकस्य | ८७ | २६ | १ | अर्जुनं |
| ,, | ५८ | १ | विधायकं | ९१ | ८ | ३ | तं |
| ७५ | ४ | १ | द्रोण | ,, | ९ | ४ | हं, गस्ते |
| ७७ | १२ | २ | दुःख | ९४, | २७, | ४ | धार्तराष्ट्राः |
| ७७ | १३ | | २र्जुन, भतॄन् | ९४, | २८, | १ | व्यथा |
| ७७ | १४ | २ | दुःख | ९५, | ३०, | ४ | सर्वांस्त्वं |
| ७८ | २० | २ | गोपाः | ,, | ,, | ४ | बहूं |
| ८० | ३० | ३ | कुरूणां | ,, | ३३ | ८ | प्राप्त |
| ८० | ३३ | २ | मलिनं | ,, | ,, | ३ | साहाय्यं |
| ८१ | ३६ | ३ | ऽर्जुन | ,, | ३५ | १ | कृष्णं |
| ८३ | १ | ३ | शंखं | ९६ | ३६ | ३ | सदार्तिं |
| ८६ | २१ | ३ | स्थित | | | | |

प्रणेतृपरिचयः नाम □ रमेशचन्द्र शुक्लः, जन्मतिथिः □ १५ अक्टूबर १९०९:, जन्मस्थानम् □ धौलपुर (राजस्थानम्) पिता □ पं० गुरुदेवशुक्लः माता □ पण्डिता गङ्गादेवी, जीवनवृत्तिः □ संस्कृताध्यापनम् विद्याविषयिणी योग्यता □ साहित्याचार्यः (वाराणसीतः). सांख्ययोगाचार्यः (वाराणसीतः), एम०ए० (आगरातः), पीएच०डी० (अलीगढतः), साहित्यरत्नम् (प्रयागतः), आवासः □ ए१/२०३ जनकपुरी, नयी दिल्ली ११००५८, कृतयः □ १-प्रबन्धरत्नाकरः, २-नाट्यसंस्कृतिसुधा, ३-संस्कृतप्रबन्धप्रभा ४-गान्धिगौरवम्, ५-भरतचरितामृतम्, ६-गीतमहावीरम्, ७-चारुचरितचर्चा, ८-बँगलादेशः, ९-इन्दिरायशस्तिलकम्, १०-विभावनम् ११-लालबहादुरशास्त्रिचरितम्, १२-सुगमरामायणम्, १३-संस्कृतवैभवम्, १४-श्रीकृष्णस्य परब्रह्मत्वम्, १५-स्वातन्त्र्यसंग्रामेतिहासः, १६-प्राची संस्कृतकविसंस्तवः १७-श्रीकृष्णचरितम्। (४, ५, ६, ७ ... कृतयः उत्तरप्रदेशशासनपुरस्कृताः)